3·5

## सोपानम्

सांख्यं हि भारतस्य सुप्रसिद्धेषु दर्शनशास्त्रेषु महोदधिकल्पमेकं दुरवगाहं शास्त्रं तत्र प्रवेशसौकर्याय किमपि सुखप्रयोगार्हं सोपानमपेक्षितमतो वक्तव्यमिदं तदात्मना संक्षेपेण प्रस्तूयते ।

## शास्त्रम्

शास्त्रशब्दो हि भारतीयवाङ्मयस्य पूज्यतमः शब्दः । स च शास्ति यद् अथवा शास्यते येनेति व्युत्पत्त्याऽनुशिष्ट्यर्थकशास् धातोर्निष्पन्नोऽनुशासनक्षमं व्यवस्थितं वाक्यसमूहमभिधत्ते । तथा च यः शब्दराशिर्मानवस्य लौकिकं पारलौकिकमाध्यात्मिकं वा हितं तत्साधनं च शास्ति तच्छास्त्रम् । तच्च प्रतिपाद्यपारतन्त्रेण वैविध्यमापद्यमानमायुर्वेदशास्त्रमर्थशास्त्रं संगीतशास्त्रं शब्दशास्त्रं धर्मशास्त्रं दर्शनशास्त्रं योगशास्त्रमित्यादिरूपेण बहुप्रकारं प्रथते ।

## दर्शनम्

दर्शनशब्दः प्राधान्येन भावल्युडन्तः करणल्युडन्तश्च प्रयुज्यते तत्प्रकृतिभूतो दृशधातुर्मुख्यतया लौकिकं चाक्षुषप्रत्यक्षमाचष्टे किन्तु विस्तृते संस्कृतवाङ्मये प्राप्यमाणानां तत्प्रयोगाणां पर्यालोचनेन विस्पष्टबोधरूपस्साक्षात्कारस्तदर्थः प्रतीयते । विस्पष्टता च विषयताविशेषो निरूपकतया प्रत्यक्षत्वनियतो धर्मः । आत्मन ईदृशदर्शनोपार्जन एव मानवजीवनस्य सार्थक्यम् । धर्मार्थकामरूपायास्त्रिवर्गसम्पत्तेस्तदर्थमेवापेक्षा अन्यथा निरर्थकस्तदर्जनायासः । यथोक्तं भागवते तत्र भवता व्यासेन—

धर्मस्य ह्यापवर्ग्यस्य नार्थोऽर्थायोपकल्पते ।
नार्थस्य धर्मैकान्तस्य कामो लाभाय हि स्मृतः ॥

कामस्य नेन्द्रियप्रीतिर्लाभो जीवेत यावता ।
जीवस्य तत्त्वजिज्ञासा नार्थो यश्चेह कर्मभिः ॥

आत्मनोऽन्यपदार्थानां चेदृशदर्शनादुद्भूतं तदुपायप्रतिपादनाय प्रवृत्तं च शास्त्रं दर्शनशास्त्रमाख्यायते । तच्चास्तिकनास्तिकप्रभेदाद् द्विविधम् । आस्तिकं दर्शनं तद् यद् वेदोदितमात्मनः स्वरूपं समर्थयति । वेदो हि तस्यैकान्तनित्यतां प्रतिपादयन् मानवं निर्भयं विधत्ते । मानवात्मनस्तादृशं स्वरूपं निरूपयति यद् विज्ञाय नान्यज्जनः कामयते । यथोक्तम्—

आत्मानं चेद् विजानीयादयमस्मीति पूरुषः ।
किमर्थं कस्य कामाय शरीरमनुसंज्वरेत् ॥

आत्मोन्नतेर्मुख्यमूलभूतया नितान्तनिर्भयताया आधायकान्येव दर्शनान्यास्तिकेति महनीयपदेन व्याह्रियन्ते । न्यायवैशेषिकसांख्ययोगपूर्वमीमांसावेदान्तापरनामोत्तरमीमांसात्मकेषु सर्वेष्वास्तिकदर्शनेष्वात्मनो निरवधिनित्यतां प्रतिपाद्य मानवजातेरभयीकरणप्रयास उपलभ्यते । न्यायदर्शनमात्मनः कर्तृतां भोक्तृतां च मन्यते कार्यानुरोधेन तस्यानित्यत्वं न प्रसज्येतैतदर्थं कार्यकारणयोरेकान्तभेदं स्वीकुरुते फलतया तद्दर्शनदृशाऽऽत्मा स्वरूपेण कार्यात्मना वा न कथमप्यनित्यतायाश्छाययाऽपि संस्पृश्यत इति तदनुसारेण मानव आत्मस्वरूपं प्रतिपद्यात्मनः सर्वथाऽभयत्वमवसायात्मन उन्नयते निर्विचिकित्सं व्याम्रियमाण

आत्मनः परमेश्वरकल्पतां सम्पाद्य कृतकृत्यो जायते। वैशेषिकदर्शनमपि कार्यकारणयोरेकान्ततो भेदमात्मनोऽनादिनिधनत्वं चाभिदधन्न्यायदर्शनमिव मनुष्यात्मनो महत्तमतां प्रतिष्ठाप्यास्तिकपदव्यपदेशं स्थान एव समाश्रयते। सांख्यदर्शनं कार्यकारणयोस्तादात्म्यवादीति पुरुषस्य कारणत्वे कार्यात्मतायास्तत्रावश्यकतया कार्यात्मना तत्रानित्यत्वापत्त्या संम्भवति कश्चन भयावकाशः, स मा भूदिति धियैव तद्दर्शनं पुरुषस्याकर्तृतामकारणतामसङ्गतां च ब्रूते। योगदर्शनमपि पदार्थानां स्वरूपे सांख्यस्यैव निष्कर्षं निजीकुर्वदात्मन एकान्तनित्यतारक्षणे बद्धपरिकरम्।

पूर्वमीमांसादर्शनमपि तान् सर्वान् प्रसङ्गान् परिजिहीर्षति यत आत्मनो नित्यता स्तोकमपि सन्दिग्धा सम्भवति, वेदान्तपदव्यपदेश्यमुत्तरमीमांसादर्शनं तु जीवात्मनः कूटस्थब्रह्मणाऽभेदमुद्घोषयत्तस्य निरवद्यनित्यताप्रतिपादनेऽद्वितीयं पदमधिकुर्वन्मनुष्यस्य सर्वश्रेष्ठतामनन्यगामिनीं महामहिमतां च प्रतिपादयत्सर्वेषामास्तिकदर्शनानां मूर्धानमध्यास्ते।

चार्वाकबौद्धार्हतदर्शनान्यात्मनो नित्यतामक्षुण्णनित्यतां वा न प्रतिपादयन्त्यतो मनुष्यजातेर्निर्भयीकरणेऽपटुतया, दर्शनान्तरापेक्षयाऽपकर्षबोधकेन नास्तिकदर्शनशब्देन व्यवह्रियन्ते। तद्यथा चार्वाकदर्शनं देहादेरनित्यस्यैवात्मत्वप्रतिपादनेन मनुष्यस्य देहाद्यन्तमेवास्तित्वं मन्यमानं तस्य कमप्युत्कर्षविशेषं न प्रतिष्ठापयति। वैभाषिकसौत्रान्तिकयोगाचारमाध्यमिकाभिधाश्चत्वारो बौद्धदर्शनसम्प्रदाया अनेकेष्वर्थेष्ववान्तरमतभेदान् दधाना अपि सर्वं क्षणिकमुद्घोषयन्तो मानवस्यापि क्षणभङ्गुरतां वदन्तस्तस्याभयीकरणेऽकुशला एव, आर्हतदर्शनमप्यात्मनो द्रव्यपर्या-

यरूपतामुपगम्य द्रव्यात्मना तस्य नित्यत्वं निरूपयदपि, पर्याया-त्मना प्रतिक्षणं क्षीयमाणतां स्वीकृत्य मनुष्यं मृत्युभयतो विमोक्तुं न क्षमते। 'नास्तिको वेदनिन्दक' इति मनुवचसा वेदनिन्दकतया चार्वाकादिदर्शनानां यन्नास्तिकत्वमुक्तं तस्याप्ययमेवाशयो यत्तानि वेदोपवर्णितमात्मनो निस्सीमनित्यतां समर्थयितुमक्षमतया मनुष्यमभयं विधातुं न प्रभवन्ति, तस्य मृत्युभीतिं निराकर्तुं न शक्नुवन्ति, समुचितमेवातो नास्तिकशब्दव्यपदेशेन वैदिकदर्शना-ऽपेक्षया तेषां न्यूनतावबोधनम्।

## दर्शनानां लक्ष्यम्

मनुष्यो हि स्वात्मानं देहादितो विलक्षणमनाकलयन् तस्य तुष्टि-पुष्टिप्रभृतीनीष्टजातानि सांसारिकविषयायत्तानि विभावयन् नैतिकताऽनैतिकते अविगणयन्नेव भौतिकीं शक्तिं-जनसम्पदं धनसम्पदं शस्त्रास्त्रसम्पदं स्वत्वविस्तारं वा संवर्धयितुमहर्निशमश्रान्तं चेष्टते। चेष्टायाश्चास्या उपरमो न तावत्सम्भवति यावत्स आत्मनस्तद् वास्तवं स्वरूपं न परिचिनुते यदर्थं सांसारिको विषयो न मना-गप्यपेक्ष्यते। तत्स्वरूपं तदेव यद् वेदा उद्घोषयन्ति यच्च वेदान्ता निर्वर्णयन्ति, तच्च सच्चिदानन्दात्मकमद्वयं ब्रह्मैव, तदवगति-प्रसवार्थमेव सर्वाणि दर्शनानि व्याप्रियन्ते। तत्रैव समेषामास्तिक-दर्शनानां परमं तात्पर्यम्, तत्पर्यन्तं मानवबुद्धिं नेतुमेव सोपान-कल्पतां भजन्ते सर्वदर्शनानि। तद्द्वारा महोच्चे मोक्षपदे मनु-ष्यस्य प्रतिष्ठापनमेव तेषां समेषां लक्ष्यम्। मनुष्यो निसर्गतो देहादिना सहात्मनो जन्मनिधने मन्यमानः स्वं कर्त्तारं भोक्तारं मनुष्यान्तरतो भिन्नं च प्रतिसन्दधानः सद्य एवात्मानमजन्मान-ममरणधर्माणमकर्त्तारमभोक्तारमद्वितीयं चाभ्युपगन्तुं न कल्पते।

अतो न्यायवैशेषिकदर्शने मनुष्यस्य काश्चिद् धारणास्तथैव द्रढयती काश्चिद् धारणा अवधीरयितुं प्रवर्तेते ते मनुष्यं ब्रूतो यत्सत्येयं ते धारणा यत् त्वं कर्त्ता भोक्ता मनुष्यान्तरतो भिन्नश्च, परमियं ते धारणा, यत्त्वं देहादिना सह जायसे वर्धसे वर्तसे म्रियसे च, वर्त्तमानदेहादेः प्राक् त्वं नासीरेतदवसाने चाग्रेऽपि न वर्तिष्यसे, नोचिता, वास्तविकतेयमस्ति यत् त्वं वर्तमानदेहादेः पूर्वमप्यासीः परमपि वर्तिष्यसे स्वविषय एतद्विपरीतवेदनं ते श्रेयः परिपन्थि, उत्तिष्ठ, जागृहि, प्राप्य गुरूनात्मानं विद्धि, अवधेहि पार्थसम्बोध्यकानि भगवतः श्रीकृष्णस्य गीतावचांसि—

न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥

न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।
न चैव न भविष्यामः सर्वे वयमतः परम् ॥

अवधारयैतद् दार्ढ्येन यन्न हि त्वं देहादिः किन्तु देहादिसाधनकः, देहादीनि त्वयाऽऽत्मनो यथार्थस्वरूपं साक्षात्कर्तुमेव लब्धानि, त्वं संसारे सर्वतो महान् त्वामेव ब्रह्मावबोधधिषणासम्पन्नं निर्माय जगत्कर्त्ता तुष्टो रचनान्तरतो विरराम ।

यथोक्तं भागवते भगवता व्यासेन

सृष्ट्वा पुराणि विविधान्यजयाऽऽत्मशक्त्या
वृक्षान् सरीसृपपशून् खगदंशमत्स्यान् ।
तैस्तैरतुष्टहृदयः पुरुषं विधाय
ब्रह्मावलोकधिषणं मुदमाप देवः ॥

इत्थं न्यायवैशेषिकाभ्यां मनुष्यो यदात्मनो देहादितो भिन्नत्वे जन्ममरणराहित्ये च जातास्थो जायते तदा सांख्ययोगदर्शने तस्य नानात्वधारणां संरक्षती एव कर्तृत्वादिधारणां निराकुरुतः, तदनुसारेण पुरुषा नूनं मिथो विभिन्नाः परं न कर्तारो नापि वस्तुतो भोक्तारः, तेऽकार्यकारणभूताः कूटस्था असङ्गा नित्यचेतनाश्च, यदा पुनर्मनुष्य उक्तदर्शनचतुष्टयपरिशीलनेनात्मनो नित्यत्वे कर्तृत्वादिराहित्ये च बद्धविश्वासो जायते, केवलं तदीया नानात्वधारणैव निराकर्त्तुमवशिष्यते तदाऽन्ते वेदान्तदर्शनं तां धारणामप्यवधूय तस्य वेदान्तप्रतिपाद्यब्रह्मरूपतामवबोध्य तं विदितवेदितव्यं लब्धलब्धव्यं कृतकर्त्तव्यं च विधाय तदीयं जन्म सार्थकयति तमपवर्गस्य परमोच्चे पदेऽभिषिच्य 'ब्रह्मविद् ब्रह्मैव भवति' इत्युक्त्यनुसारेण तस्य ब्रह्मभावमभिव्यनक्ति ।

## सांख्यदर्शनम्

सांख्यदर्शनं भारतस्य वैदिकदर्शनेषु प्रमुखं प्राचीनं प्रायः समग्रे संस्कृतवाङ्मये व्यापकं च, एतत्किल न केवलं पदार्थमीमांसाशास्त्रमपि तु महनीयं मोक्षशास्त्रं यन्मानवं दुःखत्रयदुस्तरपङ्कतः समुद्धर्तुं चिरपूर्वं प्रवृत्तम्, चिकित्साशास्त्रस्येवास्यापि शास्त्रस्य चत्वारो व्यूहाः, यथा तत्र रोग आरोग्यं रोगनिदानमारोग्योपायो भैषज्यं चेति चत्वारो व्यूहाः प्रतिपादितास्तथैवात्रापि हेयं हानं हेयहेतुर्हानोपायश्चेति चत्वारो व्यूहाः प्रतिपादिताः । तत्राधिभौतिकाधिदैविकाध्यात्मिकभेदात् त्रिविधं दुःखं हेयं, तदत्यन्तनिवृत्तिर्हानम्, प्रकृतिपुरुषयोरविवेको हेयहेतुः, तयोर्विवेकस्य सम्यक् ख्यानं हानोपायः, एतत्सम्यक् ख्यानमधिकृत्य प्रवृत्तत्वादेवेदं सांख्यशास्त्रमित्यभिधीयते ।

## सांख्यं द्विविधम्

सांख्यशास्त्रस्य द्वैविध्यं विपश्चितो वदन्ति, एकं सेश्वरसांख्यमन्यन्निरीश्वरसांख्यम्। उपनिषत्सु, महाभारते, मनुस्मृत्यादिषु भागवतप्रभृतिपुराणेषु चोपलभ्यमानं सांख्यं सेश्वरसांख्यम्, केचन मनीषिणस्तु सांख्यस्य सर्वतत्त्वाभ्युपगन्तृतया केवलमीश्वरस्यैवातिरिक्तस्य स्वीकर्तृतया योगदर्शनमेव सेश्वरसांख्यमामनन्ति, तदाशयेनैव च—

सांख्ययोगौ पृथग् बालाः प्रवदन्ति न पण्डिताः ।
एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥

इति गीतोक्तिं वर्णयन्ति।

ईश्वरकृष्णप्रभृतिभिः सांख्याचार्यैरुपन्यस्तं सांख्यं निश्चयेन निरीश्वरं सांख्यं तेषां ग्रन्थेषु चेतनप्रेरणमन्तरेणैव प्रकृतेः प्रवृत्तिशीलतायाः समर्थनात् सर्वविदं चेतनमकर्त्तारं विनैव प्रकृतिपुरुषाविवेकसहकृतात् प्रकृतिपुरुषयोः सन्निधानमात्रादेव सर्गोद्भवसम्भवस्योपपादनाद् भोगं निर्वर्त्यापवर्गार्थं प्रवर्तमानस्य पुरुषप्रतिबिम्बोद्ग्राहिणो बुद्धिसत्त्वस्य परमेश्वरानुग्रहनिरपेक्षात् प्रयत्नादेव पुरुषस्य कैवल्यसम्पत्तिसम्भवाच्च।

## सांख्यदर्शनस्य मुख्याः पदार्थाः

प्रकृतिः पुरुषस्तयोर्बन्धः कैवल्यञ्चेति सांख्यदर्शनस्य चत्वारः प्रधानतमाः प्रतिपाद्यपदार्थाः—

## तत्र प्रकृतिः

सत्त्वरजस्तमसां साम्यावस्था तद्वन्ति सत्त्वरजस्तमांसि वा प्रकृतिः। तेषामेकस्यापरसाम्यञ्चापरनिरूपितोत्कर्षापकर्षानाश्रयत्वम्। उत्कर्षापकर्षौ चायमस्मादुत्कृष्टोऽयमस्मादपकृष्ट इति-प्रतीतिनियामकाववस्थाविशेषौ, अवस्थाविशेषश्च परिणतिविशेषः सच क्रमप्राप्तस्वाव्यवहितपूर्ववर्तिपरिणामिसदृशपरिणामात्मक-कालविशेषायत्तः।

सत्त्वरजस्तमांसि च प्रत्येकं विभवोंऽशिनः स्वरूपेण मिथःसंसृष्टतया चानादयोऽनन्ताश्च, संसर्गश्च तेषां संयोगलक्षणो नैरन्तर्यलक्षणो वा। प्रकृतेर्गुणानामिदमित्थंता च विस्तरभिया परिजिहीर्षितोपन्यासतो युक्तितः शास्त्रोक्तितश्च निर्धार्या।

प्रकृतिस्तदङ्गानि सत्त्वरजस्तमांसि द्रव्यं गुणो वेति जिज्ञासाया इदमेव समुचितं समाधानमवसेयं यत्सांख्यदर्शने न्यायादिदर्शने-ष्विव पदार्थत्वस्य द्रव्याद्यन्यतमत्वसमनैयत्यानभ्युपगमेन निरुक्त-प्रश्न एव नोपपद्यतेऽतो यदर्थाभिप्रायेण न्यायादिदर्शने द्रव्यादि-पदव्यपदेशस्तदर्थाभिप्रायेण प्रकृतिः सत्त्वादयो न द्रव्यं नापि गुणः किन्तु न्यायादिदर्शनेषु द्रव्यस्येव सांख्यदर्शने प्रकृतेः सत्त्वादीनाञ्चोपादानतया द्रव्यपदव्यपदेशस्य सम्भाव्यतया प्रकृतिः सत्त्वादयो वा द्रव्यमिति व्यवहर्तुं शक्यते।

नन्वेवं तेषु द्रव्यशब्दव्यपदेशस्य सम्भाव्यतायाः समर्थनेऽपि सांख्यदर्शने तेषु समुपलभ्यमानगुणशब्दप्रयोगः कथं सङ्गच्छत इति चेदत्रेदमवधेयं सत्त्वादिषु प्रयुज्यमानो गुणशब्दो न्यायादिद-र्शनाभिमतो रूपादिषु पारिभाषिको न, अपि तु रज्ज्वर्थको बन्धनकर्तृत्वात्मकरज्जुसादृश्यनिबन्धनतया गौणः।

## पुरुषः

पुरुषोऽजन्माऽविनाशी, चैतन्यरूपोऽसङ्गो निर्गुणो विवेकी, अविषयोऽसामान्योऽप्रसवधर्माऽपरिणामी जीवादिशब्दव्यपदेश्यः प्रतिशरीरं भिन्नश्च। सत्त्वबुद्ध्याद्यपरपर्यायेण प्रकृतेः प्रथमपरिणामभूतेन महत्तत्त्वेन सहानादिसन्निधानवशात्तत्र सुखदुःखादिलक्षणानां तद्धर्माणामारोपो न तु तत्र कस्यचिद्धर्मस्योत्पत्तिर्विनाशो वा। स खलु न बध्यते न मुच्यते न च संसरति, सर्व इमे बुद्धेरेव धर्माः पुरुषे तु तदारोपमात्रम्।

## बन्धः

बन्धो नाम सत्त्वपुरुषयोरन्यत्वस्याज्ञानं तच्च न वेदान्तिनामिवानिर्वचनीयं न वा नैयायिकादीनामिवाभावरूपं किन्त्वव्यक्तज्ञानरूपं तत्तथा यावदवतिष्ठते तावत्सत्त्वं बहुप्रकारेण व्याप्रियमाणं धर्माधर्मावर्जयत् सुखदुःखादिभाग् भवति। इत्थमुत्पन्नं सुखादिकं च सत्त्वेनानादिसन्निहिते पुरुषे आरोपितं भवति आरोपश्चायं बुद्धिपरिणामतया बुद्धिगत एव, असङ्गः पुरुषस्तु न तदाश्रयः किन्तु तदधिष्ठानम्, तादृशारोपाधिष्ठानत्वमेव तस्य स्वरूपच्युतिः, सैव परिजिहीर्षिता, भोगस्य साकल्येन सम्पादनोत्तरं बुद्धिस्तत्परिहारमुद्दिश्यैव मोक्षाधायकस्य सत्त्वपुरुषान्यत्वयोः समीचः ख्यानस्याभिव्यक्त्यर्जनाय प्रवर्तते।

## मोक्षः

उक्तस्य बन्धस्य निवृत्तिरेव कैवल्यलक्षणो वास्तवो मोक्षः, दुःखत्रयस्यात्यन्तिकं हानं पुंसः स्वस्वरूपेणावस्थानं वा तदुपजीवितयैव मोक्षतया व्यपदेश्यम्। सत्त्वपुरुषयोरन्यत्वाज्ञानलक्षणस्य

बन्धस्य निवृत्तिश्च न दुष्करा ज्ञानस्य तत्साधनस्य तयो र्मिथोऽन्यत्वज्ञानस्य तयोर्वैधर्म्यज्ञानेन सुसाध्यत्वात्। वैधर्म्य-ज्ञानस्य च सांख्यशास्त्राध्ययनाधीनत्वात्, वैधर्म्यं च तयोर-भिहितं प्रकृतपुस्तके—

सम्भूयकारि त्रिगुणात्मकञ्च
साधारणं सर्वकृतेऽपि भोग्यम्।
चैतन्यशून्यं परिणामशीलं
समं द्वयं किन्तु पुमान् प्रतीपः ॥२०॥

अखिलोऽऽयमर्थः सोपकरणः सांख्यग्रन्थेषु विस्तारेण वर्णितः ; तेषु प्रकृते पुस्तके च श्रद्धया श्रमेण च द्रष्टव्यः।

## प्रकृतं पुस्तकम्

प्रकृतं पुस्तकं सांख्यरहस्यं नाम, इदं किल वाराणसेय-संस्कृतविश्वविद्यालये न्यायवैशेषिकविभागाध्यापकेन पण्डित-प्रवरेण श्रीमता श्रीरामपाण्डेयेन प्रणीतम्, अत्र सांख्यशास्त्रस्य समग्रं प्रतिपाद्यजातं सुबोधैः श्लोकैरुपन्यस्तम्, श्लोकात्मकोऽयं ग्रन्थो विद्यार्थिनां दुरवबोधो मा भूत्, सांख्यशास्त्रस्य सर्वेषा-माचार्याणां कपिलासुरिपञ्चशिखवार्षगण्यजैगीषव्यविन्ध्यवासेश्वरकृष्णदेवलवोढुप्रभृतीनां समग्रा उपलब्धयः, समेषां प्रामाणिकग्रन्थानां तत्त्वसमासषष्टितन्त्रषडध्यायीसांख्यप्रवचनभाष्य सांख्यकारिकाप्रभृतीनां पूर्णा विचाराश्चास्य पुस्तकस्याध्ययनेन सुखबोध्याः स्युरिति भावनयाऽस्य गद्यात्मिका प्रकाशाख्या व्याख्यापि श्रीपाण्डेयेन निरमायि, सव्याख्यं श्लोकात्मकं पुस्त-कस्तिकमिदं मया साकल्येनावलोकितम्। ममायं दृढो विश्वासो यत्पुस्तकमिदं सांख्यशास्त्रीयसिद्धान्तानां समीचीनज्ञानोपधाः

परमं पटीयः । अनेन विद्यार्थिनामपेक्षितबोधोदयो विद्वज्जनानां मनस्तोषश्चेत्युभयमेव निरुपद्रवम् । वर्तमाने युगे प्राचीनग्रन्थानामध्ययनं तदीयाभिप्रायावधारणमेव च प्रायो भृशं दुष्करम्, तानधीत्य कयाचिन्नूतनतयोपेतस्य नवीनग्रन्थस्य निर्माणं तु नितरां दुःसाध्यम्, अत ईदृशे प्रतिकूलेऽपि काले श्रीपाण्डेयेन यः प्रस्तुतग्रन्थप्रणयनप्रयासो विहितः सोऽतितरां स्तुत्यः । अहमस्य महनीयग्रन्थस्य रचनायै श्रीपाण्डेयं सानन्दमभिनन्दयन् तस्यायुषो यशसोऽभ्युदयस्य चानन्यगामिन उपचयाय भगवन्तं काशीविश्वनाथमभ्यर्थये ।

बदरीनाथशुक्लः,
न्यायवैशेषिकविभागाध्यक्षः,
वाराणसेयसंस्कृतविश्वविद्यालयस्य ।

श्रीमदूर्ध्वाम्नायकाशीपीठाधीश्वराणां जगद्-
गुरूणां शङ्कराचार्यश्रीस्वामिमहेश्वरानन्द-
सरस्वतीमहाभागानां शुभाशंसनम्,

किमस्ति कुर्वंश्चरितार्थं इत्यहो
जनःसमुत्तिष्ठत एष पुष्कलः ।
प्रश्नो निगूढः कथमेतदुत्तरं
विद्वन्मनोरञ्जनमातनोति यत् ॥१॥

केचित्तपो दुष्करमामनन्ति
स्पर्शं परे चित्रमथो गृणन्ति ।
शौर्यं तथान्ये विलिखन्ति धीरा
विद्याभिलेखन्तु वयं श्रिताः स्मः ॥२॥

न क्षीणतां जातकु संवृणीते
निघृष्यमाणो मुदमादधाति ।
विद्वन्मनःप्राङ्गणमुच्छ्रितश्री-
र्धावन्नजस्रं कुतुकं बिभर्त्ति ॥३॥

वाग्देवताया विशदो विशालः
सौधः समुट्टङ्कितकीर्त्तिमालः ।
यमाश्रितः कश्चन धन्यमान्यः
प्रसादमादातुमिह क्षमेत ॥४॥

लिखन्ति केचित् प्रलपन्ति चान्ये
परेऽवहासं निजमुद्वहन्ति ।
मूर्धानमुद्वेपथुमादधाना
विपश्चितां केऽपि त एव धन्याः ॥५॥

श्रीरामपाण्डेय इति प्रसिद्ध-
स्तर्कं प्रतिष्ठां गमितो बुधेन्द्रैः ।
वैयाकृती खेलति यस्य नित्यं
समुद्धता शिष्यगणोत्सवेषु ॥६॥

शास्त्राण्याकलितानि तेन विदुषा प्राप्तं यशश्चोत्तमं
पाण्डित्यं प्रकटीकृतं गुणवता छात्राः समध्यापिताः ।
दीव्यत्काशिकशासकीयभवने श्रीविश्वविद्यालये
न्यायाध्यापनमास्पदं श्रुतचरं संभूष्यते साम्प्रतम् ॥७॥

सांख्यं कापिलकीर्त्तिवैभवभृतं वैज्ञानिकैरादृतं
प्राचीनं श्रुतिहस्तितं कठिनतामाप्तं वगाहात्तमम्
कौमुद्या समलङ्कृतं विशकलं सत्कारिकालिङ्गितं
छन्दोभिर्न च शोभनं सुललितैः प्राबन्धि वृत्तैः शुभैः ॥८॥

व्याख्या नूतनमञ्जुला विरचिता प्रौढिः समावेशिता
विस्तारो न कृतो न वा लघुतया सापेक्षितं प्रोज्झितम्
तस्मात्सांख्यरहस्यमुद्धतगुणं भव्यप्रकाशाश्रितं
भो भो धावत सज्जनाः सफलतामादातुमुत्कण्ठिताः ॥९॥

**महेश्वरानन्दसरस्वती,**

धर्मसङ्घ शिक्षामण्डलम्,
दुर्गाकुण्डम्, वाराणसी ।
१८–७–६६

## वाराणसेयसंस्कृतविश्वविद्यालयीयवेदान्त-विभागस्य भूतपूर्वाध्यक्षाणां पण्डित-श्रीरघुनाथशर्म्ममहाशयानां

### सम्मतिः—

अयं सांख्यरहस्यं नाम ग्रन्थो विषयतः पूर्वाचार्यैर्बहुधा विमृष्टोऽपि श्रीरामपाण्डेयैरेव वाचां संनिवेशतो नवनवोन्मेष-शालिन्या स्वमनीषया उपक्रान्त उपज्ञातश्चेति परमं प्रमोदमा-वहामि। यद्यप्यस्ति सांख्यविषयनिरूपिका सांख्यतत्त्वकौमुदी तथापि दुरूहदुर्बोधवचनरचनामुपागता परप्रेक्षावतामेवोपकरोति न मन्दमतीनामपि। अयं तूभयेषामुपकारबुद्धया सश्रमं प्रबद्धः सम्पादयत्युभयोपकारमित्यत्र नास्ति द्वैतलेशः। अस्य सरलेन संस्कृतभाषायां व्याख्यानेन च बहूपकृतं लोकस्य ग्रन्थकृद्भिः। अयञ्चाधीतो विदुषां विनेयानाञ्च परमं प्रमोदमावक्ष्यतीत्याशासे।

रघुनाथ शर्मा

३–७–६६

# पुरोवाक्

सांख्यदर्शनस्य प्राचीनतां पुराणप्रभृतौ विपुले संस्कृतवाङ्मये सम्मानपूर्णां चर्चां सत्कार्यवादादितदीयानेकसिद्धान्तानां युक्तिमत्तां चोपलभ्य तत्र जातादरेण मया सुबोधसमीचीनच्छन्दोमयीभिः कारिकाभिः सांख्यसिद्धान्तानां केनचिन्नूतनेन पथा प्रतिपादनमभिलक्ष्य "सांख्यरहस्य"—नामकं प्रकृतं पुस्तकं पूज्यपण्डितजनानां पुरतः प्रस्तूयते, तदिदमल्पशक्तीनां विद्यार्थिनां दुरवबोधं न भवेदिति धिया "प्रकाश"–नाम्न्या व्याख्ययाप्येतदुपबृंहितम्। ममैतत्कार्यनिष्पत्तौ गुरुवरैर्वाराणसेयसंस्कृतविश्वविद्यालये न्यायवैशेषिकविभागप्राध्यापकाध्यक्षैः पण्डितवर्यैः सर्वतन्त्रस्वतन्त्रैः श्रीबदरीनाथशुक्लमहोदयैर्यदनुग्रहपूर्णं साहाय्यं प्रादायि सोपानोपन्यासेन ग्रन्थोऽयं व्यभूषि च तदर्थमहं तेषामाजीवनमधमर्णतां बिभर्मि, अस्य मुद्रणे प्रकाशने च वाराणस्या विशिष्टनागरिकेष्वन्यतमेन विक्रमपञ्चाङ्गमुद्रणालयाध्यक्षेण पण्डितश्रीरामभद्रोपाध्यायेन तदीयानुजेन पण्डितश्रीश्याममूर्त्युपाध्यायेन च यः कृपापूर्णः परमोदारः प्रयत्नो विहितो यो व्ययभारः स्वीकृतो यश्च शास्त्रानुरागः प्रदर्शितस्तदर्थं हार्दिकैर्धन्यवादैस्तावुभावेव भ्रातरौ सभाजयन् सपरिवारयोस्तयोर्दीर्घजीवनाय यशःसम्पदोर्विस्ताराय विद्याधर्मानुरागाभिवृद्धये च भगवन्तं सान्नपूर्णं विश्वनाथं प्रार्थये।

अनया मे प्राथमिक्या कृत्या यदि मनागपि मनस्तोषो मनीषिणां सम्पत्स्यते विद्यार्थिवर्गश्च स्तोकमपि यद्यभिनवमुपकरिष्यते तदात्मनः प्रयासं सफलं मन्यमानैः कृत्यन्तरैरपि

विद्वज्जनान् सेवितुं सोत्साहो भविष्यामीत्यात्मनो मनोभावं वक्ष्यमाणपद्याभ्यां सम्प्रश्रयं प्रस्तौमि—

समर्च्यरचनाञ्चिता प्रखरगर्वसर्वङ्कपा
गुणप्रगुणगौरवा प्रकृतिगोत्रमुक्ताकरा।
मतान्तरविभीषणो कपिलवंशसंवेष्टिता
वनीयमतुलाद्भुता सुकृतिभिः सदा श्रीयताम् ॥ १॥
प्रयुक्तिशतभूषणा बहुविचारसञ्चारिणी
क्षणक्षणविलक्षणस्फुरितभव्यभावोद्भटा।
इयं सुरसरस्वती विबुधभृङ्गसंसेविता
मरन्दमधुरं पयोऽमृतमहो ध्रुवं दास्यते ॥ २ ॥

प्रणेता,

# सांख्यरहस्यस्य विषयाणामनुक्रमणिका—

# सांख्यरहस्यम्

उत्पत्तिभावविधुरा ननु याऽद्वितीया
सत्त्वात्मिका च रजसस्तमसोऽप्यभिन्ना ।
सृष्टिं करोति महदादिविकारभाजां
तां शाश्वतीमविरतं प्रकृतिं नमामि ॥ १ ॥

प्रकाशः—

आढ्या गुणैर्विबुधता किल तर्ककूटै-
र्वन्द्या मनोहरकला रमणीयभाषाः ।
येषां कृपाकृपणता गुणकुञ्जकर्त्री
तान् शुक्लसौम्यचरणान्नितरां नमामि ॥ १ ॥

येषां कृपामधुरता भयभारहारी
दृष्टिं करोति विमलां विपुलानुकूल्याम् ।
तस्याः प्रभावमतुलं समवाप्य नूनं
भावप्रकाशनपरः क्रियते प्रकाशः ॥ २ ॥

उत्पत्तिभावविधुरा—उत्पत्तिर्हि स्वाधिकरणक्षणध्वंसानधिकरणक्षण-सम्बन्धस्तद्रूपेण भावेन, विकारेण विधुरा जनिविकारवर्जितेत्यर्थः (अजा) मूलप्रकृतिस्तां नमामि ।

ननु "तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम" (महाभा शा० प० गो० अ० ३३, श्लोक ३१) इति महाभारतवर्णितदिशाऽव्यक्तस्योत्पत्ति-मत्त्वाज्जन्मविकारैर्वर्जितत्वमनुपपन्नमिति चेन्न, "अजामेकां लोहितकृष्ण-

शुक्लां वह्वीः प्रजाः सृजमानां सरूपाः, अजो ह्येको जुषमाणोऽनुशेते जहा-त्येनां भुक्तभोगामजोऽन्यः" इति श्रुतेः प्रबलप्रमाणतया महाभारतवाक्यस्य पूर्वोक्तस्य चेतनसम्पर्कात् सर्गकालिकगुणत्रयक्षोभपूर्वकसृष्ट्युन्मुखत्वरूप-गुणवैषम्यावस्थापादनरूपाभिव्यक्तिपरकतया उत्पत्तिभाववैधुर्यस्याभिव्यक्ते सूपपन्नत्वात्।

विज्ञविज्ञानभिक्षवस्तु—"जन्माद्यस्य यतः" इति ब्रह्मसूत्रविवरणे विज्ञा-नामृते "संयोगलक्षणोत्पत्तिः कथ्यते कर्मजाऽनयो." "वियोजयत्यन्योन्यं प्रधानपुरुषावुभौ, "प्रधानपुंसोरनयोरेष संहार ईरितः "इति मात्स्यं कौर्मं च वाक्यमुपस्थापयन्तः पुरुषप्रकृत्योः संयोग एव तयोरुत्पत्तिर्वियोग एव च तयोर्नाश इत्येवमामनन्ति। तथा च लोकसिद्धनिरुक्तोत्पत्तिवैधुर्ये न कश्चिद् विरोधः।

"मायां तु प्रकृतिं विद्यात्" इति, सत्त्वं रजस्तम इति प्राकृतन्तु गुणत्रयम्, "एतन्मयी च प्रकृतिर्माया या वैष्णवी मता" इति श्रुतिस्मृत्यो-र्मायाप्रकृत्योः पर्यायत्वप्रतीतेर्मायायाश्च" इन्द्रो मायाभिः पुरुरूप ईयते" इति श्रुत्या अनेकत्वस्यावगमाद् "उत्पत्तिभावविधुरा" इत्यत्रैकवचनमन-नुकूलमिति शङ्कां समुच्छेत्तुम् "अद्वितीया" इत्युपात्तम्। सजातीय-द्वितीयरहितेत्यर्थः।

नन्वविकृतित्वेन पुरुषस्य प्रकृत्या साजात्यात् त्रिगुणत्वेन च महदादेरपि प्रकृत्या साजात्यात् कथं सजातीयद्वितीयरहितेति चेन्न, विकृतित्वानाश्रयत्वे सति तत्त्वान्तरोपादानत्वरूपप्रकृतसाजात्यस्याभिप्रेततया दोषाभावात्।

नन्वेवं मायाभिरित्यत्र बहुवचनमसङ्गतमिति चेन्न, प्रधानगतानन्तज्ञान-कर्मसृष्टिस्थितिप्रभृतिरूपशक्तिभेदाभिप्रायकत्वात् प्रधानात्मकगुणत्रयभेदाभि-प्रायकत्वाद् वा। "अजामेकाम्" इति प्रत्यक्षश्रुत्या मायाभिरित्यत्र लैङ्गि-कस्य बहुत्वस्य बाधात् प्रधानानेकत्वकल्पना कमठीस्तनायितैवेति भावः।

यद् गर्भोपनिषदि "अष्टौ प्रकृतयः षोडश विकाराः" इत्युक्तं यच्च "भिन्ना प्रकृतिरष्टधा" इति भगवता श्रीकृष्णेन गीतायां गीतं तद् बुद्ध्या-दीनां विकाराणामप्यहङ्कारादीनां प्रकृतित्वेनैकांशसाम्यं स्वीकृत्य महदहङ्कार-पञ्चतन्मात्राण्यपि संगृह्य अभिहितं न तु मूलप्रकृत्यभिप्रायेण अनेकत्वाभि-धानमिति भावः। एवं "माया च अविद्या च स्वयमेव भवति" इति तापनीयश्रुतिरपि स्वयमिति पदं प्रयुञ्जाना वास्तवमनेकत्वमपह्नुवाना प्रधानैकत्वेऽनुरूपैवेत्यवसेयम्।

श्रुतिसम्पन्नाया अपि प्रकृतेर्दृढत्वसम्पादनाय कार्यलिङ्गकानुमानं बुबो-धयिषुर्वक्ति "महदादिविकारभाजां सृष्टिं करोति" इति। महदादिविकार-भाजां बुद्ध्यादिविकारिणां सृष्टिं सर्गं प्राकट्यमिति यावत्। उपलक्षणविधया महदादिनिखिलविकाराणामत्र ग्रहणं बोध्यम्। करोति-सम्पादयति। शाश्वतीं नित्यां-ध्वंसाप्रतियोगिभूतां नाशरहितामिति यावत्।

ननु तिरोभावलक्षणध्वंसस्य साङ्ख्येऽपि स्वीकृततया सामान्यतो ध्वंसा-प्रतियोगित्वकथनमयुक्तमिति चेन्न, असत्कार्यवादिसम्मतस्य प्रतियोग्यसमान-कालीनप्रतियोगिपूर्वकाभावात्मकध्वंसनिषेधस्यैवात्राभिप्रेतत्वात्।

न च "अव्यक्तं पुरुषे ब्रह्मन् निष्कले सम्प्रलीयते" इति विष्णुपुराणा-दिषु प्रकृतेर्लयाभिधानात् प्रकृतेरविनाशित्वबोधनमसाम्प्रतमिति वाच्यम्, निरुक्तस्य विष्णुपुराणादिवाक्यस्य प्रलयकालिकगुणत्रयसाम्यापादनरूप-कार्याक्षमत्वरूपानभिव्यक्तिपरकतयोक्तदोषाप्रसक्तेः। तां-विविधविकारा-कारेण परिणममानां नमामि।

एकस्य प्रधानस्य महदादिविविधप्रपञ्चोपादानत्वमनुपपन्नम् एक-स्माद्धि कारणात् कार्येण एकरूपेणैव भवितव्यमन्यथा कार्यगतवैविध्यस्य आकस्मिकत्वप्रसक्त्या स्वभाववादपादाभिवादापत्तेरिति शङ्कां समूलमुन्मूलयितुं प्रधानस्य त्रिगुणात्मकत्वं प्रबोधयति—"सत्त्वात्मिका च रजसस्तमसोऽप्य-भिन्ना" इति सत्त्वरजस्तमोगुणात्मिकेत्यर्थः।

एतेन प्रधानमेव प्रपञ्चोपादानमित्यपि सुस्फुटम्। तथा हि ये हि भावा येन रूपेण समन्वीयन्ते, ते तदुपादानका यथा पटकटादयस्तन्तुहेमान्विताास्तदुपादानकाः, तथा चेमे भावाः सुखदुःखमोहात्मनान्वीयमानास्तस्मात्तेऽपि सुखदुःखमोहात्मसामान्योपादानका भवितुमर्हन्ति।

तादृशस्य गुणत्रयात्मकत्वेन प्रधानमेव संसारोपादानं नेतरत्। अनुमानप्रयोगश्चेत्थम्—सर्वे भावाः सुखाद्यात्मकोपादानोपादेयाः सुखाद्यन्वितत्वात्, यद् यदन्वितं तत्तदुपादानकं यथा तन्तुहेमान्वितं पटकटादिकं तथा चेमे तस्मात्तथेति भावः।

सरलार्थः—या स्वयमनुत्पन्ना सती एकापि सत्त्वरजस्तमोरूपत्रिगुणात्मकतया बुद्ध्यादिविकारान् सर्वान् सृजति, तां विविधविकाराकारेण परिणममानां नित्यां निरन्तरं मूलप्रकृतिं प्रणमामि ॥ १ ॥

किम्मूलकं विविधविकाराकारेण परिणमनं प्रकृतेरित्याशङ्क्य पुम्भोगापवर्गविधानरूपपुरुषार्थाख्यस्वभावादेव प्रवर्तते, नेतरेण केनचन प्रवर्त्यते इति समाधिं मनसि निधाय येषां पुंसां भोगापवर्गरूपमर्थं निष्पादयितुं नैसर्गिकी प्रवृत्तिरस्यास्तान् पुंसः प्रणमति

> ये जन्मनाशरहिताः पुरुषा विमूढा-
>
> स्तां सेविकामविकृतिं प्रकृतिं श्रयन्ते।
>
> एनाञ्च ये जहति मोक्षपदं ददानां
>
> नत्या विवेकिपुरुषानपि भावये तान् ॥२॥

ये—अहम्प्रतीतिगोचरत्वेन प्रख्याताः, जन्मनाशरहिताः—जनिनाशविधुराः। ननु "यतः प्रधानपुरुषौ" "प्रधानं पुरुषश्चैव लीयेते परमात्मनि" इत्यादिवाक्ये पुरुषोत्पादप्रलययोश्श्रूयमाणतया पुरुषस्य जन्मनाशरहितत्वमसङ्गतमिति चेन्न, गुणत्रयवैषम्यदशायां प्राकृतगुणसम्पर्कादुदासीनस्य पुरुषस्यौ-

पाधिकभोक्तृत्वापत्तिरूपोत्पत्तेरङ्गीकृततया गुणत्रयसाम्यावस्थायाञ्च विकारविधुरस्य तस्याविक्रियस्वरूपावस्थितिरूपलयस्य चाङ्गीकृततया जन्मनाशरहितत्वस्य सुसङ्गतत्वात् ।

पुरुषास्तां प्रकृतिं—प्रधानं श्रयन्ते—अव्यक्ततत्त्वादात्मनोऽन्यत्वमजानाना अव्यक्तधर्मान् क्लेशादिकानात्मन्यभिमन्यमाना मूढा वयं दुःखिनः सुखिनश्चेत्येवं तर्कयन्ति तान् विवेकशून्यान् बद्धान् पुंसोऽहं नत्या भावये। ये चानादिपुरुषाः प्राप्तप्रधानपुरुषान्यत्वप्रतीतय एनां प्रकृतिं जहति अनात्मत्वेन तिरस्कुर्वन्ति तान् विवेकिपुरुषान्—विवेकशीलान् पुंसोऽहं नत्या भावये।

कीदृशीं प्रकृतिमज्ञानिनो जनाः श्रयन्त इति विचिकित्सायाश्चिकित्सायै विशेषणमुच्यते—'तां सेविकाम्' इति, शब्दाद्युपभोगप्रदानेन पुंसो भजमानां सेवमानां सेविकां सुखाद्यात्मकशब्दादिरूपावस्थान्तरेण पुम्भोगं साधयन्तीमिति। यद्यपि भोगप्रभृतयः परिणामाश्चित्तस्यैव वृत्तिविशेषभूता धर्मास्तथापि चितिचित्तयोर्जपापुष्पस्फटिकयोरिव सन्निधानादभेदग्रहे चित्तवृत्तीः स्वस्मिन्नारोप्य शान्तो दुःखितो मूढश्चास्मीत्यध्यवस्यति पुमान्। यथा निर्मले मलिने वा दर्पणतले प्रतिबिम्बिते वदने दर्पणतलीयां विमलतां-मलिनतां चारोप्य विमलं मलिनञ्च मुखमध्यवस्यति। एवञ्च चित्तवृत्तिसारूप्यात् पुरुषस्यौपाधिको भोगो ज्ञेयः। सुस्पष्टं चैतत् 'वृत्तिसारूप्यमितरत्र' इत्यत्र पातञ्जले पा० १ सू० ४।

कीदृशीञ्च प्रकृतिं ज्ञानिनस्तिरस्कुर्वन्ति इत्याकाङ्क्षायाः शान्तये च विशेषणमुच्यते—"मोक्षपदं ददानाम्" इति, मोक्षपदम्—अपवर्गपदम्—अपमृज्यते-केवलीभवति मुच्यते येन विवेकज्ञानेन सोऽपवर्गः, तं ददानाम्—सम्पर्यन्तीम्—सम्पादितपौरुषेयापवर्गत्वेन समाप्ताधिकारामिति यावत्।

इदमत्राकूतम्—प्रकृतितत्त्वं तावदेव हि विचेष्टते यावद् भोगं वा अपवर्गं वा न साधयति, साधितभोगापवर्गा तु सफला सती स्वयमेवोपरमति, पुंसाञ्चानन्त्याद् यं प्रति निष्पादितभोगापवर्गा तं प्रत्येव उपरमति न तद-

न्यान् प्रति, एवञ्च स्थिता एकस्मिन् विवेकिनि पुरुषे सति, प्राकृतपरिणाम-विरामो न, यथोक्तं च योगदर्शने द्वितीयपादे—

"कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वादिति"। पूर्वोक्तप्रकारेण गुणत्रयात्मिका प्रकृतिरेव कर्त्री, पुमर्थ एव तस्याः प्रवृत्तेर्हेतुः पुमर्थनिष्पादनमेव च तत्कार्यं, पुमानुदासीनोऽपि प्राकृतगुणसङ्गाद् अविवेकाद् भोक्तृत्वेन बध्यते, विवेकख्यात्या चासङ्गत्वभावनाधारया मुच्यते इत्यादिरूपः प्रकृतदर्शनाभिधेयः प्रकाशितः।

सरलार्थः—प्रकृतितत्त्वादात्मनोऽन्यत्वमजानानाः प्रकृतिनिष्ठसुखित्वदुःखित्वादिकमात्मनि सुखिनो दुःखिनो मूढा वयमित्यभिमन्यमाना जन्मनाशविधुरा अप्यविवेकिनो येऽजाः शब्दाद्युपभोगप्रदानेन सेवमानां सेवन्ते प्रकृतिं तानथ च ये विवेकिनोऽजा निष्पादितभोगापवर्गां कृतकृत्यां प्रकृतिं परित्यजन्ति तान् धन्यांश्च प्रणमति ॥ २ ॥

क्रमेण साम्प्रतं प्रकृतदर्शनप्रवर्तकसङ्ग्राहकाचार्यशिरोमणीन् स्मरणीयाननुस्मरति—

**साङ्ख्यप्रवर्तनकरं कपिलं महर्षिं**
**शिष्यञ्च तस्य बुधमासुरिनामधेयम्।**
**तस्यापि पञ्चशिखमुत्तमशिष्यरत्नं**
**नित्यं स्मरामि मनसेश्वरकृष्णविज्ञम् ॥३॥**

ऋषौ महत्त्वं निखिलवेदविषयकज्ञानवत्त्वं, तथाहुर्विष्णुसहस्रनामभाष्ये शङ्कराचार्याः—

महर्षिः कपिलाचार्य्य इति सविशेषणमेकं नाम—महांश्चासावृषिश्चेति महर्षिः कृत्स्नस्य वेदस्य दर्शनाद्, अन्ये तु वेदैकदर्शनाद् ऋषय इति। "ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्त्ति" "महर्षिः कपिलाचार्य्यः" इति

श्रुतिस्मृतिभ्यां कपिलस्य महर्षित्वं निर्विवादं सिद्धम् । तथा च साङ्ख्यदर्शन-प्रवर्तनकरम्—साङ्ख्यदर्शनप्रवर्तकम् महर्षि निखिलवेदज्ञातारं कपिलं नित्यं सततं स्मरामि भावये । एवं रीत्या प्रथमसाङ्ख्याचार्य्यं स्मृत्वा "पञ्चमे कपिलो नाम सिद्धेशः कालविप्लुतं, प्रोवाचासुरये साङ्ख्यं तत्त्वग्राम-विनिर्णयम्" (भागवत प्र० स्क० अ० ३ श्लो० १०) इत्यभिहितं द्वितीया-चार्य्यमासुरिं स्मरति—"शिष्यञ्च तस्य" इत्यादिना । यथा अनौपदेशिक-ज्ञानशीलत्वेन कपिलो महामुनिर्नैवमासुरिः, किन्तु औपदेशिकज्ञानवत्त्वेन मुनिरयमित्युच्यते—"तस्य" इति—कपिलाद् आप्ततत्त्वज्ञानत्वेन कपिलस्य शिष्यमित्यर्थः, तदुक्तम्—पञ्चशिखाचार्य्येण "आदिविद्वान् निर्माणचित्त-मधिष्ठाय कारुण्याद् भगवान् परमर्षिरासुरये जिज्ञासमानाय तन्त्रं प्रोवाच" इति । साम्प्रतम्—'आसुरेः प्रथमं शिष्यं यमाहुश्चिरजीविनं । पञ्चस्रो-तसि निष्णातः पञ्चरात्रविशारदः" "पञ्चज्ञः, पञ्चकृत्, पञ्चगुणः, पञ्चशिखः स्मृतः" महाभा० प० १ अ २१८ श्लो० १६ ) इत्युक्तलक्षणम् "जटा वह्निशिखारूपा पञ्च सन्ति च मस्तके, तपस्तेजोभवा यस्य स च पञ्चशिखः स्मृतः" ( ब्रह्मवै० ब्र० खं० अ० २२ श्लो० १६ ) इत्युक्त-स्वरूपं वा तृतीयाचार्य्यं स्मरति— "पञ्चशिखम्" इति । पञ्चशिखस्य तन्त्रेषु प्रतिपादितं कापिलं शास्त्रं शिष्यपरम्परया पञ्चशिखादतितरामर्वा-चीनेनेश्वरकृष्णेन स्वगुरुभ्योऽप्रकाशितनामधेयेभ्यो लब्ध्वा सप्तत्यार्याभिः संक्षिप्तमिति । साम्प्रतम् साङ्ख्यार्य्यासप्ततिनिर्मातारं साङ्ख्याचार्य्यं स्मरति—"ईश्वरकृष्णविज्ञमित्यादिना ।

सरलार्थः—साङ्ख्यदर्शनप्रवर्तकं महर्षि कपिलं तच्छिष्यमासुरिनामकं मनीषिणं तदुत्तमशिष्यरत्नं पञ्चशिखं साङ्ख्यार्य्यासप्ततिनिर्मातारं विज्ञ-मीश्वरकृष्णञ्च प्रणमति ॥ ३ ॥

सम्प्रति तत्त्वज्ञसाङ्ख्याचार्य्यनामनिर्देशनपुरस्सरप्रणमनेन प्रकृततत्त्वोप-पादकशास्त्रोपादेयतां शिष्टाचारानुगमनञ्च विज्ञाप्योपादेयहेतुभूतां प्रकृत-

दर्शनस्यानन्यसाधारणाभिधेयवत्तां प्रेक्षावदपेक्ष्यमाणां प्रकटयितुं समर्थयितुञ्च प्रकृतदर्शनारम्भकस्य परीक्षकत्वं विज्ञापयितुमारभते—

अभीप्सितार्थप्रतिपादको यः
श्रद्धास्पदं तस्य गिरो भवन्ति ।
अनीप्सितार्थप्रतिपादकस्य
भवन्त्युपेक्ष्याः सुतराञ्च वाचः ॥४॥

इह इत्यप्यध्याहार्य्यम्, इह व्यवहारभूमौ परीक्षकजनपरिषदि वा अभीप्सितार्थप्रतिपादकः—अभीप्सितस्य संदिग्धत्वेन सप्रयोजनत्वेन च (निर्णीते निष्प्रयोजने च जिज्ञासानुदयात् ) जिज्ञासागोचरस्यार्थस्याभिधेयस्य प्रतिपादकः—प्रतिपादयिता वाग्व्यवहारेण स्वमनोगतं परत्र संक्रामयिता बोधयिता उपदेष्टा यस्तस्य गिरः—वाचः श्रद्धास्पदम्—श्रद्धाविषयाः भवन्ति, अनीप्सितस्य—असंदिग्धत्वेन निष्प्रयोजनत्वेन च अजिज्ञासितस्य अर्थस्य—अभिधेयस्य प्रतिपादकः बोधयिता उपदेष्टा यस्तस्य वाचः—गिरः सुतरां निश्चयरूपेण उपेक्ष्या हेया भवन्ति—जायन्ते, अर्थात् अनीप्सितार्थप्रतिपादको न लौकिको नापि परीक्षको लौकिकपरीक्षकजनविलक्षणो भ्रतिविप्लवशील इति ज्ञात्वा उन्मत्तवदुपेक्ष्यो हेयो भवति । लोके सामान्यजनसमवाये एव यो भवः सत्तावान् न विद्वद्गोष्ठ्यामुपवेष्टुमर्हः, स लौकिकः, सांसारिककुटुम्बभरणक्रयविक्रयादिव्यवहारकलापमात्रचतुरः शास्त्रीयसंस्कारवञ्चितो नरः । परितः—सर्वतः—प्रमाणैस्तर्केण च य ईक्षते—पश्यति वस्तुतत्त्वं निश्चिनोति स परीक्षकः, पारमार्थिकविमर्शकुशलः, शास्त्रीयसंस्कारसम्पन्नो नर इति । तदुक्तं न्यायदर्शनभाष्यकारवात्स्यायनमुनिना—"लोकसाम्यमनतीता लौकिका नैसर्गिकं वैनयिकं बुद्ध्यतिशयमप्राप्ताः, तद्विपरीताः परीक्षकास्तर्केण प्रमाणैरर्थं परीक्षितुमर्हन्ति" इति ।

सरलार्थः—संदिग्धत्वेन सप्रयोजनत्वेन च जिज्ञासागोचरस्य वस्तुतत्त्वस्य उपदेष्टुर्वचांसि समादरपुरःसरश्रवणीयतां व्रजन्ति, किन्त्ववश्यमसंदिग्धत्वेन अप्रयोजनत्वेन च जिज्ञासीनर्हस्य वस्तुनः उपदेष्टुर्गिरो हेया भवन्ति ॥४॥

प्रेक्षावतां प्रतिपित्सितोऽर्थः को यो ज्ञातः सन् परमपुरुषार्थाय भवेदिति प्रारब्धुमिष्टं यच्छास्त्रं तस्य यो विषयः पञ्चविंशतितत्त्वात्मकः, तद्गोचरज्ञानस्य त्रिविधदुःखात्यन्ताभावरूपपरमपुरुषार्थस्य साधनं यद् विवेकज्ञानं तस्योपायत्वात्, तद्विषयजिज्ञासामारभते—

दुःखत्रयं कष्टकरं समेषा-<br>
मतस्तदुच्छेदकरं विधानम् ।<br>
ज्ञातुं स्वतः काङ्क्षत एव लोकः<br>
परं जगत्यां नहि दृश्यते तत् ॥ ५ ॥

जिज्ञासाविघटकाः कैश्चिदुपस्थापिताः सम्भावनामूलकाः विकल्पाः प्रदूष्यन्त इदानीम्,

(१) पीडापरपर्य्यायं प्रत्यात्मप्रतिकूलवेदनीयं दुःखं यदि जगति न विद्येत तर्हि शास्त्रविषयो न केनापि जिज्ञास्येत ।

(२) सदपि तद् दुःखं यदि हातुमभिलषितं न भवेत् ।

(३) हातुमभीष्टमपि तद्दुःखं यदि केनापि पौरुषेयेण यत्नेनापनेयं न भवेत् ।

(४) दुःखापनयनोपायपरिचयाद् दुःखस्यापनेतुं शक्यत्वेऽपि प्रकृतशास्त्रविषयकज्ञानस्य तदपनयनानुपायत्वाद् यदि विवेकज्ञानं साधनं न स्यात् ।

(५) विवेकज्ञानापेक्षया सुलभस्योपायान्तरस्य वर्तमानत्वेन यदि विवेकज्ञानमन्यथासिद्धं स्यात् ।

आदिमं विकल्पद्वयं विघटयितुं तत्र न तावद् दुःखं नास्ति न वा त्यक्तुमनभिलषितमत एवोच्यते—"दुःखत्रयं कष्टकरं समेषाम्" इति ।

दुःखानां त्रयं दुःखत्रयम्, तत्किल आध्यात्मिकमाधिभौतिकमाधिदैविकञ्च । कायिकमानसिककष्टयोरेकीकरणेन दुःखत्रयाभिधाने न काचनानुपपत्तिः ।

आत्मानम् = देहमधिकृत्योत्पद्यमानं यन्नैसर्गिकमशनायादिकं यच्च धातुप्रकोपजन्यं ज्वरातिसारादि 'यच्चात्मानम्—अन्तःकरणमधिकृत्योत्पद्यमानं कामादिनिबन्धनं दुःखं तत्सर्वमाध्यात्मिकं तदेव शारीरपदेन मानसपदेन चोद्घोष्यते जगति । मानसं कामक्रोधलोभमोहभयेर्ष्याविषाद-विषयविशेषादर्शननिबन्धनम्, कामः—इष्टविषयाभिलाषः, क्रोधः—अनिष्ट-विषयद्वेषः, लोभः—सत्यपि धने तदादानेच्छा, मोहः—हानोपादानविवेच-नासामर्थ्यम्, भयम्—अनिष्टदर्शनजन्यत्रासः, ईर्ष्या—परसम्पदुत्कर्षासहि-ष्णुता, विषादः—स्नेहास्पदपदार्थविच्छेदहेतुकव्याकुलीभावः, विषयविशेषा-दर्शनम्—अनिश्चयात्मकमनेककोटिकं ज्ञानम्, संशय इति यावत् । एते सर्वे परिणामा मनस्येवाविर्भूतास्सन्तो मनुजं तापयन्तीत्येतन्निबन्धनं दुःखं मानसमित्युच्यते । यद्यपि समस्तमपि दुःखं मनोधर्मत्वेन तज्जन्यत्वान्मानस-मेव तथापि यन्मनोमात्रजन्यं तन्मानसं यच्च बाह्यनिमित्तसापेक्षमनोजन्यं तदितरदित्येवं दुःखानां परस्परं भेदः कल्प्यः ।

सर्वञ्चैतदान्तरोपायसाध्यत्वादाध्यात्मिकं दुःखम्, साध्यशब्दोऽत्र निवर्त-नीयपर्य्यायः असाध्योऽयं रोग इत्यादौ निवर्तयितुमनर्होऽयं रोग इत्यर्थदर्श-नात् साध्धातोरत्र निवृत्त्यर्थकत्वादितिभावः । एवञ्च आन्तराः—शरीरा-भ्यन्तरे वान्तःकरणे भवाः—सत्तावन्तो ये उपायाः अन्नाम्बुभेषजदम-दयादानविवेचनादयः साधनविशेषाः, अन्नमन्तर्भवं सदशनायां शमयति, अम्बु चान्तर्गतं सत् पिपासामपनयति, भेषजं चान्तरं ज्वरादि हन्ति, दमश्च कामं शिथिलीकरोति, दया च क्रोधमपनयति, दानञ्च लोभमुच्छिनत्ति, विवेचनञ्च मोहमुन्मूलयति इत्येवमेते सर्वे आन्तरास्सन्तस्तत्तद्दुःखमुन्मू-लयन्तीत्यान्तरोपायास्तैः साध्यत्वाद् निवर्तनीयत्वाद् दुःखमप्युपचारादान्तरं सदाध्यात्मिकमुच्यते ।

यथा आन्तरं दुःखं द्विविधं तथा शरीराद् बहिर्भवा ये दण्डच्छत्रमणिमन्त्रादयः साधनविशेषास्ते बाह्योपायास्तैर्निवर्तनीयं दुःखं बाह्यम्—तदपि द्विप्रकारकम्—आधिभौतिकम् आधिदैविकञ्च—दण्डादिना कुक्कुरव्याघ्रादिजन्याधिभौतिकस्य दुःखस्य वारणम्, छत्रेणातपादिजन्यस्य मणिमन्त्रादिना यक्षादिजन्यस्याधिदैविकस्य दुःखस्य वारणं बोध्यम् ।

भूतानि—जरायुजाण्डजस्वेदजोद्भिज्जरूपाणि-चौरवैरिकुक्कुरसिंहव्याघ्रमहिषपक्षिसर्पयूकादंशमशकवृश्चिकनक्रमकरवृक्षशिलादीनि चराचरजातीयानि, अधिकृत्य निमित्तीकृत्य जायमानं यद् दुःखं तदाधिभौतिकम्, मानुषपशुसरीसृपस्थावरनिमित्तकमिति यावत् ।

यच्च देवान्—यक्षादीन् दिवः प्रभवान् वातवर्षातपशीतोष्णादीन्—वा निमित्तीकृत्य जायते तदाधिदैविकं यक्षराक्षसविनायकग्रहावेशनिबन्धनमिति यावत् ।

ननु मानसं दुःखमान्तरोपायनिवर्त्यं भवतु, शारीरन्तु ज्वरादि न तथा, नहि भेषजादय आन्तरा, अपितु बाह्या इतिकथमान्तरोपायसाध्यत्वं शारीरस्य दुःखस्य, यद्युच्येत बाह्या अपि भेषजादयः शरीरसंसर्गेणान्तरा इति तर्हि बाह्या मणिदण्डादयोऽपि कथन्नान्तराः, तेऽपि हि शरीरसंसर्गिण एव सन्तो दुःखमुन्मूलयन्ति न यत्र तत्र स्थिताः सन्त इति चेन्न उपायानां बाह्यत्वाविशेषेऽप्यन्तःप्रवेशाप्रवेशकृतविशेषस्य पूर्वमुक्तत्वात् ।

अत्रेदमाकूतम्—

भेषजादयः सत्यं बाह्यास्तथापि यथान्तःप्रविष्टास्ते ज्वरादिकं शमयन्ति न तथा मणिदण्डादयोऽन्तः प्रविष्टाः सन्तस्तथा सम्पादयन्त्यपितु बहिरवस्थिता एव तत्तद्दुःखमुन्मूलयन्तीति विशेषोऽस्त्येव ।

ननु यथान्तरप्रविष्टा एव मणिदण्डादयस्तत्तद्दुःखमुन्मूलयन्ति तथा मनोज्ञाङ्गनालिङ्गनमप्यन्तरप्रविष्टमेव कामं शमयति । एवमपामार्गरूपो भेषजविशेषोऽपि हस्ते बद्धः सन् अन्तरप्रविश्यैव ज्वरादिं शमयतीति न

परस्परं दुःखानां विशेषः सुस्पष्ट इति चेन्न आन्तरोपायसाध्यत्वादित्यत्र जलाहरणादिकं घटसाध्यम् इत्यत्रेव साध्धातोर्जन्यार्थकतया शरीराभ्यन्तरे मनसि वा भवा ये धातुवैषम्यादयः कामादयो वा निमित्तविशेषास्तैः साध्यत्वेन—जन्यत्वेन निवर्तनीयत्वेन शारीरस्य मानसस्य चान्तरतया शरीरमनोवहिर्भूतसिंहव्याघ्रवर्षातपनिमित्तविशेषजन्यत्वेन आधिभौतिकादेर्बाह्यतया च क्लेशानां मिथो विशेषस्य सुस्पष्टत्वात् ।

बुद्धितत्त्ववर्तिरजोगुणपरिणामविशेषात्मकं निखिलजनानुभववेदनीयं त्रिविधं दुःखं पूर्वोक्तं प्रत्याख्यातुं न शक्यतेऽनुभवसिद्धस्यापलापायोगादित्येव चित्रितम्—"दुःखत्रयं कष्टकरं समेषाम्" इत्यादिना । एतेन दुःखं नाम जगति नास्तीत्यात्मकः प्रथमो विकल्पो निराकृतो वेदितव्यः ।

पूर्वोक्तेन दुःखत्रिकेण सह चेतनाशक्तेः पुरुषस्य अनिष्टकारकमसह्यसम्बन्धमन्तरा दुःखत्रयस्य कष्टकरत्वमनुपपन्नं स्यादिति कष्टकरत्वकथनेन अजिहासितमित्यात्मकद्वितीयविकल्पोऽपि निरस्तः ।

ननु बुद्धिवृत्तिधर्मस्य दुःखस्य चेतनेन सह सम्बन्धोऽनुपपन्न इति चेन्न बुद्धितत्त्वप्रतिविम्बितत्त्वेन तत्सारूप्यापत्तेः । ननु दुःखं जिहासितं भवतु तथापि अशक्यनिरोधं तत्, साङ्ख्यनिकाये नासत उत्पत्तिर्न वा सतो निरोध इति सत्कार्यवादस्याङ्गीकृततया सतो दुःखस्य समुन्मूलयितुमशक्यत्वादिति चेन्न सतां निरोधाभावेऽपि दुःखानामभिभवस्य कर्तुं शक्यत्वात् । एतेन नित्यत्वेन दुःखमशक्यसमुच्छेदमित्यात्मकतृतीयविकल्पः परिहृतः ।

ननु दुःखत्रयोच्छेदकोपायान्तरस्य सुकरस्य विद्यमानतया अत्यायाससाध्ये शास्त्रे प्रवृत्तिरसम्भवेति चेन्न—दुःखानां शाश्वतिकनिवृत्तेरुपायान्तरासाध्यत्वेन तदेकमात्रसाधनप्रयासातिशयसाध्येऽपि शास्त्रे प्रवृत्तेरौचित्यात् । एतेन शास्त्रविषयकज्ञानस्यानुपायत्वाद्वेत्यात्मकचतुर्थविकल्पोऽपि परास्तः । प्रकृतशास्त्रबहिर्भूतोपायानां दुःखत्रिकस्य शाश्वतिकनिवृत्तावपर्य्याप्ततया सुकरस्योपायान्तरस्य सद्भावाद्वेत्यात्मकपञ्चमविकल्पोऽपि पराहत एव ।

समेषाम् प्राणिनां दुःखत्रयं पूर्वोक्तं कष्टकरम्—पीडाजनकम् अतः—अस्मात् कारणात्, तदुच्छेदकरम्—दुःखत्रयसमुन्मूलकम्, विधानम्—उपायं लोकः—जनः, ज्ञातुम्—अन्वेष्टुं, स्वतः-निसर्गतः, काङ्क्षते—अभिलषति एव ।

यदि लौकिकोपायैर्दुःखं शक्यसमुच्छेदं तर्हि प्रयाससाध्ये प्रकृत-शास्त्रप्रतिपाद्योपाये जिज्ञासा व्यर्थैवेत्याशङ्कावारणायोच्यते "परं जगत्यां न हि दृश्यते तत्" इति ।

परम्—किन्तु, जगत्याम्—जगतीतलेऽस्मिन् तत्—विधानम्—दुःखत्रयसमुन्मूलकम्, हि—निश्चयेन, न दृश्यते—अवलोक्यते ।

सरलार्थः—सर्वेषां दुःखत्रयं पीडाकरमिति दुःखत्रयसमुन्मूलकं विधान-मन्वेष्टव्यम् इति सर्वेषां नैसर्गिकी जिज्ञासा जायते, किन्तु जगतीतलेऽस्मिन् तादृशं समर्थविधानं दृष्टिपथं नायाति ॥ ५ ॥

दुःखानां समुन्मूलनं वाह्योपायैः कर्तुं शक्यं किं प्रयोजनं प्रकृत-शास्त्रप्रतिपाद्योपायावलम्बनस्य इत्याशङ्कोपशमनायोच्यते—

चेद् दृश्यते क्वापि तथापि तेन
विनिश्चिता शाश्वतिकी निवृत्तिः ।
दुःखस्य तस्य त्रिविधस्य नास्ते
तस्माद् भवेत्तत्र कथं प्रवृत्तिः ॥ ६ ॥

ननु विद्यतां दुःखत्रयं, भवतु च तद्धानेच्छागोचरः, सम्भवतु तच्छक्य-समुच्छेदं, समर्थश्च भवतु शास्त्रप्रतिपाद्यो विवेकस्तदुच्छेदाय, तथापि नात्र विवेके जिज्ञासा उचिता लोकप्रसिद्धस्य सुकरस्य दुःखविनाशकस्य भेषजादेरुपायस्य जागरूकत्वात् । तथाहि—वैद्यधौरेयैश्चिकित्साकुशलैर्धन्वन्तरिचरकप्रमुखैः शारीरदुःखनिवारणायोपदिष्टा अनेके उपाया

अल्पायाससम्पाद्याः सुकराः सन्ति, मानसतापप्रतिकारस्तत्तदभिलषिताङ्ग-नासवपानसदन्नाशनचन्दनविलेपनवसनभूषणात्मकविषयप्राप्तिरूप उपायो मानससन्तापापहारायालम् ।

एवमाधिभौतिकस्य क्लेशस्य प्रतिकारकरो नीतिशास्त्राभ्यासकुशलता— 'दंष्ट्रिणः शृङ्गिणो दूरतः परिवर्ज्याः, 'नादण्डो बहिर्गच्छेत्' इत्यादि बार्हस्पत्यौशनसकामन्दकीयनीतिशास्त्राभ्यासनिपुणता, तथा निर्बाधनिरुप-द्रवपरिखोपेतमणियन्त्राद्यन्तर्हितगिरिदुर्गादिरूपस्थानावलम्बनमित्यादिरुपायः सुकरः, "दोषोपसर्गप्रभवाश्च ये ते नोपद्रवास्तं समभिद्रवन्ति, गुणैः समुच्यैः सकलैरूपेतं यं पद्मरागं प्रयतो बिभर्ति" इत्यादिना मणिप्रकरणे मणिधारणस्य तत्तदुपद्रवविद्रावकत्वस्मरणाद् मन्त्रानुष्ठानस्य च तच्छास्त्रे उपद्रवापनोदकत्वप्रसिद्धत्वाच्च "कृष्णामरीचसिन्धूत्थमधुगोरचनाकृतम् । अञ्जनं सर्वदेवादिकृतोन्मादहरं परम्" इत्यादिनौषधाद्युपयोगः आधिदैविकस्य क्लेशस्य प्रतिकारकरोपायः, इत्याद्याशङ्कानिरासायोच्यते—"चेद् दृश्यते क्वापि तथापि तेन, विनिश्चिता शाश्वतिकी निवृत्तिः" इत्यादिना । दृष्टे उपाये नियमेन दुःखनिवर्तकत्वरूपमेकान्तत्वं नास्ति, दृष्टोपायजन्य-दुःखनिवृत्तौ च भविष्यद्दुःखासहवर्तित्वरूपमत्यन्तत्वं नास्ति 'इति' न शाश्वतिकनिवृत्तिरित्यनेनार्थो विवक्षितः । चेद्—यदि, क्वापि—कुत्रापि, दुःखनाशकरोपायो दृश्यतेऽवलोक्यते तथापि तेन—दृष्टेनोपायेन तस्य त्रिर्वोक्तस्य त्रिविधस्य—त्रिप्रकारकस्य दुःखस्य क्लेशस्य शाश्वतिकी निवृत्तिः—एकान्तात्यन्ततोऽभावो न आस्ते वर्तते तस्माद् पूर्वोक्तहेतोर्विज्ञानां तत्र लौकिके सुकरोपाये कथं प्रवृत्तिः ?

सरलार्थः—क्वचन लौकिकेन उपायेन दुःखत्रिकस्य निवृत्तिर्दृश्यते इति लौकिकोपायः सुकरस्तथापि चिकीर्षिताया ऐकान्तिकात्यन्तिकदुःख-निवृत्तेर्न स उपायस्तस्माद् लौकिकोपाये सुकरेऽपि प्रवृत्तिर्व्यर्थैव चिकी-र्षितायाः दुःखनिवृत्तेरसंसाधकत्वात् । अर्थात् लौकिकेनोपायेन दुःखनिवृत्ति-

रवश्यं भवतीति नावलोक्यते, यत्र भवति तत्रापि पुनरुत्पद्यते दुःखं दुःखस्यात्यन्तनिवृत्तिर्न जायते, उभयविधनिवृत्तेरकारणत्वाद् धेयो लौकिकोपायः ॥६॥

ननु लौकिकोपायो मा भूद् दुःखनिवृत्तेर्हेतुरानुश्रविकोपायोऽस्तु ज्योतिष्टोमादिः संवत्सरपर्यन्तः कर्मकूटस्तापत्रयमेकान्तमत्यन्तं च विनाशयिष्यति—

ननु स्वर्गविषयाभिलाषवान् यागेनेष्टं स्वर्गं सम्पादयेदित्येव "स्वर्गकामो यजेत्" इति श्रुत्या बोध्यते न तु यागेन आत्यन्तिकीं दुःखनिवृत्तिं सम्पादयेदित्याम्नायते तत्कथं प्रकृतार्थे वैदिकोपाय आश्रयितव्य इति चेन्न तादृशदुःखनिवृत्तेरेव नामान्तरं स्वर्ग इति प्रकृतार्थे वैदिकोपायस्य आवश्यकत्वात्। तथा चोक्तम्—

**यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्।**
**अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्॥**

यत्सुखं दुःखेन न संभिन्नम्—दुःखसम्पर्कविधुरम्, दुःखासम्मिश्रितमिति यावत्। ननु किमिदं दुःखासम्मिश्रितत्वं—न तावद् दुःखासामानाधिकरण्यम्, असम्भवात् नहि स्वर्गप्राप्तेरर्वाग् यद् दुःखाधिकरणमन्तःकरणं ततोऽधिकरणान्तरं स्वर्गस्येति सम्भवः, नापि दुःखासमानकालिकत्वं तदस्मदादिसुखस्यापि दुःखसमानकालासत्त्वेन विशेषाभावाद् न हि नः सुखं दुःखकाले सद् येन स्वर्गपदाभिधेयं सुखं ततो विशिष्येतेति चेद् अत्र ब्रूमः—इतरविशेषणसहकारेण लौकिकसुखविलक्षणमोक्षसलक्षणसुखविशेषस्यैव विवक्षिततया दोषाभावात्। तथाहि—यथा लौकिकं सुखं स्वसमयेऽन्यसुखाप्राप्तिनिबन्धनविषादेनानुषक्तं न तथेदमपितु—दुःखेन न संभिन्नम्, इति—वर्तमानकालिकान्याभिलषिताप्राप्तिनिबन्धनदुःखासम्मिश्रमित्यर्थः।

किञ्च लौकिकं सुखं यथा सुखसाधनस्रक्चन्दनादिसम्पादनायासरूपप्राक्कालिकदुःखानुषक्तं तथा नेदं किन्तु "अभिलाषोपनीतम्" इति संकल्पमात्रेणैव सामीप्यमाप्तं न तु साधनसम्पादनायासाधीनमिति यावत्।

किञ्च यथा लौकिकं सुखमन्तरान्तरा तिरोभूय विरलप्रवाहशीलं भवति नेदं तथा अपि तु "अनन्तरम्" इति व्यवधानहीनम्—अविरलसंलग्नप्रवाह-शीलत्वेन चिरकालस्थायित्वादुत्तरकालिकदुःखासम्मिश्रमित्यर्थः । किञ्च यथा सार्वभौमादिसुखं लौकिकं चिरकालस्थाय्यपि अन्ते ग्रस्तं भवति न तथेदं ग्रस्तमपितु "न च ग्रस्तम्" इति नाशाप्रतियोगि—अक्षयि इति यावत् । एवंविधं यल्लौकिकदुःखासम्मिश्रं सुखं तत् स्वःपदास्पदम्—स्वर्गपदाभिधेयम् । वैदिकेनोपायेनैवंविधे स्वर्गेऽवाप्ते आत्यन्तिकी दुःखनिवृत्तिरर्थात् सिद्धा । स्वर्गः स्वसत्तया—स्वीयोदारावस्थया मूलेनाधर्माख्येन कारणेन दुरदृष्टेन सह दुःखं हन्तीति न भूयो दुःखोत्पादशङ्का ।

ननु "तद् यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयतेऽर्थात् लोके कर्मचितः—कृषिव्यापारकर्मणा सम्पादितः लोकः धान्यधनादिः क्षीयते एवम् अमुत्र परलोकेऽपि यागादिजन्यपुण्यसंम्पादितः सुधापानाप्सरोरमणादिरूपो भोगोऽपि क्षीयते "यत्कृतकं तदनित्यम्" इति व्याप्तिमूलया श्रुत्या कर्मजन्यस्वर्गस्य क्षयित्वश्रवणेन कथं 'न च ग्रस्तम्' इत्यनेनाक्षयित्वाभिधानमिति चेन्न "अपाम सोमममृता अभूमागन्म ज्योतिरविदाम देवान्, किन्नूनमस्मान् कृणवदरातिः, किमु धूर्तिरमृतमर्त्यस्य" कदाचिदिन्द्रादीनां देवानां कल्पः—समाजः—सभा आसीत्, कथं वयममृता अभूमेति विचार्य यस्माद् वयम् "अपाम सोमम्" पीतवन्तः सोमं तस्मादमृता अभूम—अमरा भूतवन्त इत्यर्थः । किञ्च अगन्म—गतवन्तो लब्धवन्तो ज्योतिः—स्वर्गमिति अविदाम देवान्—दिव्यान् विदितवन्तः, एवञ्च किन्नूनमस्मान् कृणवदरातिः नूनम्—निश्चितम् किम् अरातिः—शत्रुरस्मान् तृणवत् कर्त्तेति, "किमु धूर्तिरमृतमर्त्यस्य" धूर्तिः—जरा हिंसा वा, किं करिष्यति, अमृतमर्त्यस्य—मर्त्यशब्दोऽत्र मर्त्यवाची व्यत्ययेन च बहुत्वे एकवचनम् । तथा च मरणरहितशरीरवतामस्माकं जरादिर्नास्तीत्यर्थकया श्रुत्या स्वर्गस्याक्षयित्वबोधनात् ।

नन्विनया श्रुत्या स्वर्गिणाममृतत्वमेवाभिहितं न स्वर्गस्याक्षयित्वमभिहितमिति चेन्न स्वर्गस्य प्रक्षये सति अमृतत्वासम्भवाद् अमृतत्वश्रुत्यन्यथानुपपत्त्या स्वर्गाक्षयित्वस्य कल्पनीयत्वात्। तथा च मुहूर्त्तमात्रनिर्वर्तनीयसन्ध्योपासनादियामनिर्वर्तनीयपिण्डपितृयागादिमासनिर्वर्तनीयमासाग्निहोत्रादिसंवत्सरनिर्वर्तनीयज्योतिष्टोमादीनामल्पकालसाध्यत्वात् सुकरत्वेन वैदिकविधानेनैव आत्यन्तिकदु:खनिवृत्तिः सम्पन्नेत्यनेकजन्मपरम्परायां यो ज्ञानसाधनानुष्ठानाभ्यासरूप आयासस्तेन सम्पादनीये दुष्करे विवेकज्ञाने जिज्ञासा व्यर्थेत्याशङ्कानिरासायोच्यते—

अशुद्धिनाशाल्पविशेषदोषै-
व्याप्तं विधानं निगमस्य तस्मात्।
विभाति तुल्यं खलु लौकिकेन
द्वयं तदत्रास्ति विहीनशक्ति ॥ ७ ॥

लौकिकेन विधानेन तुल्यं निगमस्य विधानम्, ऐकान्तिकात्यन्तिक—तापप्रतिकारानुपायत्वस्योभयत्रापि समानत्वात्। "अविशेषश्चोभयोः" इति साङ्ख्यसूत्रमपि अमुमेवार्थमुपोद्बलयति।

ननु "आत्मा वा अरे द्रष्टव्यः" (प्रकृतितो विवेक्तव्यः) "न स पुनरावर्तते" "तमेव विदित्वातिमृत्युमेति" "तमेवं विद्वानमृत इह भवति" "तरति शोकमात्मविद्" इत्यादिनिगमानां विवेकज्ञाने उपयोगित्वान्नैगमविधानस्य लौकिकविधानतुल्यत्वकथनं सुतरामसङ्गतमिति चेन्न निगमप्रतिपाद्यविवेकज्ञानातिरिक्तज्योतिष्टोमप्रमुखयागसमूहादिकर्मकलापरूपनैगमविधानस्य लौकिकतुल्यत्वावधारणात्। लौकिकोपायवद् वैदिकोपायोऽपि नामृतत्वसाधक इत्यभिप्रायेणोच्यते—"अशुद्धिनाशाल्पविशेषदोषैर्व्याप्तम्" इत्यादिना साध्यसोमादियागनिरूपिता या पशुबीजादिवधनिष्ठा कारणता सैवात्राशुद्धिरित्यर्थः।

अयमभिप्रायः—होमदेवपूजनदक्षिणाप्रदानादिरूपपुण्यजनककर्मसाध्यस्य सोमयागादेर्यत्पशुहिंसाबीजवधादिरूपपापजनककर्मसाध्यत्वं तदेव सोमयागादेर्निगमविधानस्याशुद्धिव्याप्तत्वम्। योगभाष्ये भगवता व्यासदेवेनापि "शुक्लकृष्णा बहिःसाधनसाध्या तत्र परपीडानुग्रहद्वारेण कर्माशयप्रचय इत्येवं यागस्याशुद्धिव्याप्तत्वमभिहितम्,

अत्रेदमाकूतम्—

चतुष्टयी खलु कर्मजातिः, तत्र तमोमूला दुःखमात्रफलिका ब्रह्महत्यादिरूपा कृष्णा, रजोमूला दुःखोपसर्जनसुखफलिका यागादिरूपशुक्लकृष्णा, सत्त्वमूला सुखमात्रफलिका सन्ध्योपासनप्रणवजपादिरूपा शुक्ला, गुणाहेतुका निजानन्दफलिका सम्प्रज्ञातसमाध्यादिरूपाऽशुक्लकृष्णा। तथा च सूत्रं "कर्माशुक्लकृष्णं योगिनस्त्रिविधमितरेषाम्" (पा ४ सू० १) एवञ्च यागस्य शुक्लकृष्णकर्मत्वेनाशुद्धिव्याप्तता सुस्फुटेति बोध्यम्। यागादेर्निगमविधानस्याशुद्धिव्याप्तत्वकथनेन कथं दृष्टसाम्यं, न हि दृष्टे मणिमन्त्रादिरूपे उपाये ऽशुद्धियोगः कश्चित् प्रतीयते इति चेच्छ्रूयताम्—यथा यागाङ्गभूतदीक्षणीयादिदक्षिणावसानपुण्यकर्मणा अमुत्र सुखं जन्यते, एवं यागाङ्गभूतपशुबीजादिवधपापकर्मणा दुःखमपि जन्यते, तथा च यथा लौकिकोपायस्य दुःखसम्मिश्रसुखजनकत्वं तथा वैदिकोपायस्यापि दुःखसम्मिश्रसुखजनकत्वमिति सोऽपि दृष्टतुल्य इति भावः। भगवता पञ्चशिखाचार्य्येणाप्युक्तम् "स्वल्पः सङ्करः सपरिहारः सप्रत्यवमर्ष" इति। "स्वल्पः सङ्करः ज्योतिष्टोमादिः" इति ज्योतिष्टोमजन्यस्य प्रधानीभूतधर्मस्य यः पशुहिंसादिजन्येनाप्रधानीभूताधर्मेण सह सामानाधिकरण्येन सहावस्थानरूपः संसर्गः स सङ्कर इत्यर्थः, पुण्यापेक्षयाऽल्पत्वेन च स स्वल्पः, यागे हिंसाजन्यः स्वल्पः सङ्कराख्यः प्रत्यवायो वर्तते इत्यर्थः। सङ्करस्याल्पत्वेनाल्पेनैव प्रायश्चित्तेन सोऽपनेय इत्यभिप्रायकः, सपरिहारः—कियतापि "यत् पशुर्मायुमकृतोरो वा पद्भिराहते" अग्निर्मा तस्मादेनसो विश्वान् मुञ्चत्वंहसः" इत्यादिमन्त्रवर्णबोधितेनाल्पेनापि प्रायश्चित्तेन परिहर्तुं शक्यः।

यदि प्रमादतः---आलस्यात् प्रायश्चित्तमपि नानुष्ठितं तर्हि ज्योतिष्टो-ममूलभूतस्वर्गभोगकाले स सङ्कराख्यः प्रत्यवायो फलोन्मुखीभवति एवं सत्यसौ हिंसाजन्योऽधर्मो यावदनर्थं वृत्रासुरादिभयरूपं स्वफलं सूते— उत्पादयैति तावत् स प्रत्यवमर्षः—अवश्यं सहनीयः सङ्करजन्यं दुःखमवश्यं भोक्तव्यमित्यर्थः। उक्तञ्च वाचस्पतिमिश्रेण साङ्ख्यतत्त्वकौमुद्याम्— मृष्यन्ते हि पुण्यसम्भारोपनीतस्वर्गसुधामहाह्रदावगाहिनः कुशलाः पापमात्रोपपादितां दुःखवह्निकणिकाम्।

नाशः—विनष्टिः, विशेषः—तारतम्यं न्यूनाधिक्यमिति यावत्। यद्यपि नाशविशेषौ फलगतौ यागफले स्वर्गे एव विद्यमानौ न तु तदुपाये यागे तथापि उपाये—स्वर्गसाधने यागे उपचारेणाभिहितौ। अत्रोपचारश्च स्वाश्रयजनकत्वरूपः, स्वौ—नाशविशेषौ तदाश्रयः स्वर्गादिः, तज्जनकत्वं यागादेः, उपायोपेययोरभेदविवक्षा वा। एवञ्च यथा लौकिकविधानं नाशविशेषविशिष्टसुखजनकं तथा निगमसाधनमपि यागादिरूपं तथाविध-सुखजनकमिति सिद्धं नैगमविधानस्य दृष्टसाम्यमिति भावः। भगवता व्यासेनापि स्पष्टीकृतमेतत्—एवं लोकं परं विद्यान्नश्वरं कर्मनिर्मितम्। सतुल्यातिशयध्वंसं यथा मण्डलवर्तिनाम्" (भा० स्कं० ११ अ० ३ श्लोक २०) जनकं प्रति प्रबुद्धाख्ययोगेश्वरवाक्यमिदम्—"सतुल्याति-शयध्वंसं—सह तुल्येन अतिशयेन ध्वंसेनच वर्तमानम्, अतस्तुल्ये स्पर्धा, अतिशयेऽसूया, ध्वंसालोचनैर्भयादिकं चापरिहार्य्यम्। यथा खण्डमण्डल-पतीनां स्पर्धादि, तद्वत् इत्येतट्टीकायां श्रीधरः।

"श्रुतं च दृष्टवद् दुष्टं स्पर्द्धाऽसूयात्ययव्ययैः। बह्वन्तरायकामत्वात् कृषिवच्चापि निष्फलम्॥" (भाग स्क० ११ अ० १० श्लोक २१) उद्धवं प्रति श्रीकृष्णवाक्यमिदम्, श्रुतं स्वर्गादि तदपि दुष्टं, स्पर्धापरसुखा-सहनम्, असूया—परगुणे दोषाविष्करणम्, अत्ययः—नाशः व्ययः—अपक्षयः, तैर्दुष्टम्, यद्वा व्ययो नाशः, अत्ययः—अन्यस्यातिशयः, तं दृष्ट्वा तदप्राप्त्या

दुःखम्, किञ्च बहवोऽन्तरायाः वैगुण्यादिरूपा विघ्ना यस्मिन्कामे सुखे तस्य भावस्तत्त्वं तस्मात् कृषिर्यथा वहुविघ्नास्तद्वत् इत्येतदर्थं इति श्रीधरः। ननु स्वर्गस्य विनाशित्वे पूर्वमुक्ताया अमृतत्वबोधिकायाः श्रुतेः का गतिरिति-चेच्छ्रूयताम् "अपाम सोममममृता" इति अमृता इत्यत्र नञोऽल्पार्थकत्वेन अल्पं मर्त्यापेक्षया न्यूनं मृतं मरणं येषां तेऽमृताश्चिरकालस्थायिन इति यावत्। "नाकस्य पृष्ठे सुकृतेऽनुभूत्वेमं लोकं हीनतरं वा विशन्ति" 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति" इति श्रुतिस्मृतिभ्यां स्वर्गस्थानामधः-पतनरूपमरणसत्त्वावगमनेनैतादृशार्थस्यैवौचित्यमत्रेतिभावः। विष्णुपुराण-वाक्यमपि अमुमेवार्थं द्रढयति—

"आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते। त्रैलोक्यस्थितिकालोऽयम-पुनर्मार उच्यते॥ (विष्णु पु० अं० २ अ ५ श्लो० ९६) पूर्वत्र देवयान-मार्गेण जनादिलोकं गता अमृतत्वं भजन्ते इत्यभिहितम् तत्र कीदृशम-मृतत्वमिति विचिकित्सायामुक्तम्—'आभूतसंप्लवम्' इति। तच्च ब्रह्माहः-पर्य्यन्तं यत्स्थानं तदेवामृतत्वमुपचारादुच्यते, उपचारवीजं "त्रैलोक्य-स्थितिकालोऽयम्" इति, अपुनर्मारः—पुनर्मृत्युरहितः, क्रममुक्तिस्थानत्वात् इत्येतद् व्याख्यायां रत्नगर्भभट्टः, श्रीधरस्वामी च। यागादेर्नामृतत्व-प्रापकत्वमित्यर्थमेव द्रढयति कैवल्यश्रुतिरपि—"न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः। परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति"॥ पूर्वे महात्मानः कर्मणा श्रौतेन स्मार्तेन वा कर्मकलापेन नामृतत्वमानशुः प्राप्तवन्तः, एवं प्रजया पुत्रेणापि न एवं धनेन दैवेन मानुषेण वा वित्तेनापि न, किन्तु एके मुख्या विवेकिनः त्यागेन त्याग-साध्येन विवेकज्ञानेनामृतत्वमानशुः प्राप्तवन्तः। त्यागेन अभिमानत्यागेन एके केचिदेवामृतत्वमानशुः प्राप्तवन्तो न सर्वे, अभिमानत्यागस्य तत्त्वज्ञान-जन्यतया दुर्लभत्वादित्यर्थ इति साङ्ख्यप्रवचनभाष्यकारा विज्ञानभिक्षवः-(अ० १ सू० ८५)। पूर्वोक्तमेव द्रढयति द्वितीया श्रुतिरपि—

**कर्मणा मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमीहमानाः।**
**तथाऽपरे ऋषयो मनीषिणः परं कर्मभ्योऽमृतत्वमानशुः ॥**

ये प्रजावन्तः पुत्रिणो गृहस्थाः द्रविणमीहमानाः सुवर्णपशुप्रभृति-मानुषं वित्तमभिलषन्तः सकामाः, ये चैवंविधाः सकामा ऋषयो वानप्रस्थास्ते सर्वे कर्मणा मृत्युमेव ( प्रेत्यभावाख्यपुनर्जन्मैव ) निषेदुः प्रापुः नामृतत्वम्, यथा सकामा गृहस्था वानप्रस्था वा कर्मणा मृत्युं प्रापुः तथा तेभ्योऽपरे ये निष्कामाः मनीषिणः पुत्रवित्तादिभ्यो विरज्य सन्न्यासपुरःसरं प्रकृतिपुरुषान्यताप्रत्ययशालिनस्ते ऋषयः कर्मभ्यः परं कर्मकलापजन्यस्वर्गादिभ्य उत्कृष्टममृतत्वं प्राप्तवन्तः। एवं रीत्या लौकिकं वैदिकं विधानञ्च द्वयमपि अपवर्गप्रदाने विहीनशक्ति-असमर्थम्।

सरलार्थः—अविशुद्धिविनाशाल्पातिशयदोषग्रस्तं निगमविधानमवश्यं लौकिकविधानेन समं, यथा लौकिकविधानस्य नापवर्गजनकत्वं तथा ज्योतिष्टोमादिवैदिककर्मकलापात्मकविधानस्यापि नापवर्गजनकत्वम् ॥७॥

कुतस्तर्हि मुक्तिः, किंस्वरूपा चेति विचिकित्सायामुच्यते—

**विधानमेकं समदोषमुक्तं**
**दुःखत्रयध्वंसन-कर्मदक्षम्।**
**साङ्ख्योक्तपञ्चाधिकविंशतेस्तु**
**पदार्थकानां सुविवेकबुद्धिः ॥ ८ ॥**

वैदिककर्मकलापोपायप्राप्याक्षयिसातिशयसुखविशेषरूपस्वर्गातिरिक्तोऽक्षयिनिरतिशयसुखात्मको मोक्षः। तस्य च कर्मकलापातिरिक्त एव प्रकृतशास्त्रप्रतिपाद्यस्तत्त्वविवेक उपायोऽतः स एव जिज्ञासागोचर इत्याशयेनोच्यते विधानमेकं समदोषमुक्तम् इत्यादिना॥

साङ्ख्योक्तपञ्चाधिकविंशतिपदार्थकसुविवेकबुद्ध्यात्मकमेकं विधानं लौकिकविधानेन वैदिकविधानेन च समं दोषविशिष्टञ्च नास्त्यपितु साम्यदोषाभ्यां मुक्तम्—विरहितं विद्यतेऽथ च दुःखत्रयस्य पूर्वोक्तस्य ध्वंसनकर्मणि—विनाशक्रियायां दक्षम्—समर्थं विद्यते, तत एव मुक्तिः। एतेन साङ्ख्यप्रतिपाद्यतत्त्वविवेकात्मकविधानमेव केवलमेकं मुक्तिप्रदायकं नान्यत् किञ्चिदपरं विधानं, किञ्च दुःखत्रिकस्य ऐकान्तिकात्यन्तिकध्वंस एव मुक्तिर्नान्यरूपेति सुस्पष्टं सूचितम्। न च जन्यत्वेनानित्यता मोक्षस्य जातेति कस्यापि सचेतसोऽनित्ये तस्मिन् प्रवृत्तिर्न स्यादिति वाच्यम् भावकार्य्यस्यानित्यत्वात् दुःखप्रध्वंसस्य तु कार्य्यस्यापि नित्यत्वावगमात्।

सुखोपभोगरूपश्च यदि मोक्षः प्रकल्प्यते।
स्वर्ग एव भवेदेष पर्य्यायेण क्षयी च सः॥१०५॥

न हि कारणवत्किञ्चिदक्षयित्वेन गम्यते।
तस्मात् कर्मक्षयादेव हेत्वभावेन मुच्यते॥१०६॥

न ह्यभावात्मकं मुक्त्वा मोक्षनित्यत्वकारणम्।
न च क्रियायाः कस्याश्चिदभावः फलमिष्यते॥१०७॥

तत्र ज्ञातात्मतत्त्वानां भोगात्पूर्वक्रियाक्षये।
उत्तरप्रचयासत्त्वाद् देहो नोत्पद्यते पुनः॥१०८॥

कर्मजन्योपभोगार्थं शरीरं नः प्रवर्तते।
तदभावे न कश्चिद्धि हेतुस्तत्रावतिष्ठते॥१०९॥

इत्यादिना कर्मक्षयनिमित्तं शरीरसम्बन्धरूपबन्धप्रध्वंसं मोक्षस्वरूपं प्रदर्श्य—

मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ।
नित्यनैमित्तिके कुर्यात् प्रत्यवायजिहासया ॥११०॥

इत्येवंरूपेण श्लोकवार्त्तिके मुक्तये कुमारिलेन उपायान्तरमभिहितम् । यदि च यागादिकाम्यकर्मजन्यस्यैव स्वर्गस्य मोक्षत्वमभ्युपेतं भवेत्तर्हि काम्ययागादित्यागपुरःसरम् मोक्षार्थी न प्रवर्तेत इत्येवं मोक्षोपायान्तरश्रवणं व्याकुप्येत ।

शरीरसम्बन्धो बन्धस्तदभावो मोक्षस्तेन निष्पन्नानां देहानां यः प्रध्वंसाभावो यश्चानुत्पन्नानां प्रागभावः स मोक्षः, कर्मनिमित्तश्च बन्धः कर्मक्षयादेव न भवति ॥१०६॥ सिद्धयति चाभावात्मकत्वे मोक्षस्य नित्यता नत्वानन्दात्मकत्वे इत्याह–"न हि" इति । यदि तु अभावरूपस्यापि मोक्षस्य ज्ञानमेव साधनमुच्यते अत आह–"न च क्रियायाः" इति ॥ १०७ ॥ यदि च न क्रियाफलमभावः कुतस्तर्हि तत्सिद्धिः । ननु कर्मक्षयादेव सत्यं स एव तु कुतः सिद्धयति, तत्राह–"तत्र ज्ञात" इति । यो हि देहाद् विविक्तमजरममरदुःखमात्मानं जानाति तस्य देहसम्प्रयोगविरक्तस्य पूर्वकृतानां कर्मणां फलोपभोगेनैव क्षयात्तन्निमित्ते शरीरे पतितेऽनागतानां च कर्मणामननुष्ठानादेवासत्त्वाद् देहान्तरानुत्पत्तेरत्यन्तासम्बन्धः शरीरेण भवति ॥ १०८ ॥ न चासत्यपि कर्मणि मातापितृसंयोगादेव शरीरनिष्पत्तेर्न मोक्षसिद्धिरत आह "कर्मजन्य" इति, धर्माधर्मसहितो मातापितृसंयोगः शरीरहेतुर्न तु तन्मात्रमिति नः अस्माकं शरीरमित्यन्वयः ॥ १०९ ॥ तेन मोक्षार्थिभिर्न विवेकज्ञानमात्रेण कृतार्थं मन्यमानैः स्थातव्यं किन्त्वेव कर्त्तव्यमित्याह–"मोक्षार्थी" इति, काम्यनिषिद्धे हि स्वफलयोरभ्युदयप्रत्यवाययोरुपभोगाय शरीरमारभेते, न शरीरारम्भं परिजिहीर्षता ते कर्त्तव्ये, नित्यनैमित्तिके च पूर्वकृताधर्मक्षयाय कर्तव्ये, तदैव चात्मोपासनस्यापि पूर्वकृतकर्मक्षयद्वारेणैव मोक्षसाधनत्वम् उपासनाभिप्रायेण च "ज्ञानाग्निः सर्वकर्माणि भस्मसात्

कुरुते तथा'' इति भगवद्वासुदेववचनं न विवेकज्ञानाभिप्रायम् इति श्लोकवार्त्तिकार्थ इति न्यायरत्नाकरकारः पार्थसारथिमिश्रः । स्वर्गातिरिक्तो मोक्षो मीमांसकैरभ्युपेयत इत्येतस्मिन्नर्थेऽयं कुमारिलभट्टग्रन्थः साक्षित्वेनोपन्यस्तो न तूपादेयमिदं मतमित्याशयेन नैष्कर्म्यसिद्धावेतन्मतस्य दूषितत्वेन न विवेकिभिरुपादेयत्वेनानभ्युपगमादित्यपि बोध्यम् ।

यद्यपि साङ्ख्यनये सत्कार्यवादाङ्गीकारेण दुःखप्रध्वंसस्य मोक्षत्वाभिधानं पराहतं तथापि दुःखप्रध्वंसपदेनात्र दुःखातीतावस्थाया एव तात्पर्यविषयत्वेनाभिधानाद् न कुचोद्यावसरः ।

नन्वतीतावस्थाया नित्यत्वेन मा भूदतीतावस्थं दुःखम् उदितावस्थापन्नं दुःखान्तरं कथं नोत्पत्स्यते इति चेन्न कारणस्य दुःखजनकस्य पुम्प्रकृत्योरविवेकस्याप्रवृत्तौ विवेकेन विनाशित्वादनुपस्थितौ सत्यां दुःखरूपकार्योत्पत्तेरसम्भवात् । ननु भोगापवर्गनिष्पत्त्यर्थं प्रकृतिप्रवृत्तिरिति हि राद्धान्तरीतिस्तथा चाविवेकस्य नष्टत्वेऽपि मूलकारणप्रकृतेर्नित्यत्वेनानिवृत्तत्वात् तत्प्रवृत्तेर्दुर्वारत्वात् तन्निबन्धनदुःखान्तरोपत्पत्तिरपरिहार्येति चेन्न मूलकारणभूतायाः प्रकृतेः प्रवृत्तेर्विवेकज्ञानजननपर्य्यवसानत्वस्याभ्युपगततया विवेकज्ञानोत्तरं प्रकृतिप्रवृत्तेरनुत्पादात् ।

सरलार्थः—साङ्ख्यशास्त्रप्रतिपादितपञ्चाधिकविंशतिपदार्थकानां सुविवेकबुद्ध्यात्मकमेकं विधानं लौकिकवैदिकविधानासमं दोषैः शून्यञ्च त्रिविधतापध्वंसात्मकमोक्षस्य साधकं नान्यद् विधानं किञ्चिदिति ॥ ८ ॥

अनया रीत्या प्रेक्षावदपेक्षितार्थत्वेन मतिमताभीप्सितो दुःखात्यन्तोच्छेदरूपोऽर्थस्तद्वत्त्वेन हेतुना प्रकृतशास्त्रानारम्भशङ्कां निरस्य, अनन्यथासिद्धप्रयोजनवत्त्वादेतच्छास्त्रमारम्भणीयमिति सिद्धान्तीकृत्य च येषां तत्त्वानां विज्ञानाच्छ्रेयस्करः साक्षात्कारः समुदेति, तेषां तत्त्वानामवान्तरविशेषं परिचाययितुमुच्यते—अर्थात् प्रकृतशास्त्राभिधेयविवेकानुयोगिप्रतियोगिभूततत्त्वजातं किमित्युच्यते—

न कारणं वा पुरुषोऽस्ति कार्यं
कार्यं न मूलं, प्रकृतिः कदापि ।
परं द्वयं सप्त ततो भजन्ते,
कार्यात्मकः षोडशतत्त्वसङ्घः ॥ ९ ॥

साङ्ख्यशास्त्राभिधेयतत्त्वग्रामस्यावान्तरविधाश्चतस्रः, कश्चिदर्थः प्रकृतिरेव ( कारणमेव ) कश्चिदर्थो विकृतिरेव ( कार्य्यमेव ) कश्चित् प्रकृतिर्विकृतिश्च ( कारणकार्योभयरूपः ) कश्चिदनुभयरूपः ( न कारणं न वा कार्य्यम् ) तत्र का प्रकृतिरेवेत्यत उक्तम्—"मूलप्रकृतिः" विश्वान्तःपातिपुरुषस्यानादितया कार्य्यसङ्घातस्यैव विश्वस्य मूलप्रकृतिर्ज्ञेया ।

ननु प्रकृतिशब्दस्य कारणार्थकत्वात् प्रकृतिरित्येतावतैव प्रधानस्य जगत्कारणत्वे सिद्धे पुनः कारणार्थकमूलपदोपादानस्य नैरर्थक्यमिति चेन्न, अनवस्थादोषग्रस्ततया कारणमेव प्रधानं न कस्यचित्कार्य्यमिति विशेषार्थबोधनस्यावश्यकतया मूलपदस्य नैरर्थक्याभावात् ।

## अयमभिप्रायः

प्रधानकारणत्वेनाभिमतं यत्तत्त्वान्तरं तस्मिन् प्रधानापेक्षया कश्चिदतिशयविशेषोऽभ्युपेयते न वा, न वेति चेत् तस्य न कारणत्वमतिशयाभावात् । न ह्यतिशयमन्तरेण कार्य्यकारणभावो दृष्टचरः कुत्रापि, अतिशयोऽस्ति चेत्, किंरूपोऽसाविति चेद् वक्तव्यम्, निर्गुणत्वचेतनत्वापरिणामित्वरूपोऽसाविति चेत्, तथापि न कारणत्वम् अपरिणामिनः कार्य्यजनकत्वस्यादृष्टत्वात्, शक्तिरेवातिशय इति चेत् सापि जन्या अजन्या वा, जन्या चेत् तदवस्था अनवस्था, अजन्या चेत् सैव शक्तिः प्रकृतिः अजा अविद्या प्रधानमिति नाममात्रे विवादः । ननु कार्य्यं नेत्युक्त्यैवाजन्यत्वलाभात् पुनर्मूलपदोपादानं किमर्थमिति चेच्छ्रूयताम्—तत्त्वान्तरोपादानत्वं प्रकृतित्वं, तच्च महदादिविकारेऽपि वर्ततेऽत उक्तं मूलेति, तत्त्वञ्च तत्त्वान्तरानुपादेयत्वम्, एतदेव स्पष्टयितु-

मुक्तं मूले "कार्य्यं न" इति। कार्यकारणरूपाणि तत्त्वानि कानि? इति जिज्ञासायामुक्तं "सप्त" इति। महदादीनि सप्त इति यावत्। तथाहि महत्तत्त्वमहङ्कारस्य कारणम्, कार्य्यञ्च मूलप्रकृतेः, एवमहङ्कारतत्त्वं तन्मात्राणामिन्द्रियाणाञ्च कारणम्, कार्यं च महतः, तथैव पञ्च तन्मात्राणि तत्त्वानि भूतानामाकाशादीनां कारणानि कार्य्याणिं चाहङ्कारस्य। अथ कार्य्याणि कानि तत्त्वानि? इति जिज्ञासायामुक्तम्— "कार्य्यात्मकः षोडशतत्त्वसङ्घः" इति, पञ्च महाभूतानि एकादशेन्द्रियाणि च षोडशतत्त्वसङ्घः कार्य्यमेव न कारणम्। ननु एकादशेन्द्रियाणां प्रकृतित्वाभावेऽपि षोडशान्तःपातिनां पञ्चस्थूलभूतानां पृथिव्यादीनां गोघटवृक्षादीन् प्रति प्रकृतित्वस्य सम्प्रतिपन्नतया कथं तेषां विकृतित्वमेव न प्रकृतित्वमिति चेन्न—तत्त्वान्तरोपादानत्वरूपस्य प्रकृतित्वस्येह विवक्षितत्वात्।

## अत्रेदमाकूतम्—

प्रकृतिशब्दो हि साम्यावस्थापन्नगुणत्रयात्मकत्वरूपेण निमित्तेन मूलकारणे प्रधाने, तत्त्वान्तरोपादानत्वरूपेण निमित्तेनाहङ्कारादिकारणे महदादौ, उपादानत्वरूपेण निमित्तेन घटकटकादिकारणे मृत्कनकादौ प्रवर्तते। तत्र यदि साम्यावस्थापन्नगुणत्रयात्मकत्वरूपं सूत्राद्यभिहितमेव प्रकृतिलक्षणमत्राश्रीयते तदा प्रधाने प्रकृतित्वव्यवहारसम्पत्तावपि महदादौ प्रकृतित्वव्यवहारो न संघटेत। यदि चोपादानत्वमात्रमेव प्रकृतिलक्षणमत्राश्रीयते तदा महदादौ प्रकृतित्वव्यवहारसम्पत्तावपि मृत्कनकादेरपि प्रकृतित्वव्यवहारापत्तिः स्यात्। अत उभयदोषनिरासाय तत्त्वान्तरोपादानत्वरूपमेव प्रकृतित्वलक्षणमास्थीयते तापरमिति, तथा च न कुत्रापि दोषलेशः, एतादृशलक्षणे महदादौ प्रकृतित्वव्यवहारानापत्तिरूपो दोषः पृथिव्यादौ च प्रकृतित्वव्यवहारापत्तिरूपो दोषश्च नागत इति भावः। ननु तत्त्वान्तरोपादानस्यैव प्रकृतित्वे मृत्प्रकृतिको

घटः, कनकप्रकृतिकं कटकमित्यादौ मृदादौ प्रकृतित्वव्यवहारस्य कथं निर्वाह इति चेच्छ्रूयताम्—तत्त्वान्तरोपादानरूपेऽर्थे शक्तमपि प्रकृतिपदं भागत्यागलक्षणयोपादानत्वमात्रमर्थमादाय मृदादौ लाक्षणिकः प्रकृतित्वव्यवहारः । एकदेशभूतोपादानत्वरूपसाधर्म्यमादाय गौणो वा व्यवहारः । किमिदं तत्त्वान्तरत्वमिति चेत् तत्त्वत्वञ्च द्रव्यत्वं, तत्त्वान्तरत्वञ्च स्वोपादानावृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम्, पञ्चविंशतितत्त्वेषु पञ्चविंशतिजात्यनङ्गीकारे च तत्त्वान्तरत्वं स्वोपादानावृत्तिद्रव्यविभाजकोपाधिमत्त्वमिति । तथा च यथाहङ्कारादेः स्वोपादानमहदाद्यवृत्तिद्रव्यत्वसाक्षाद्व्याप्याहङ्कारत्वादिजातिमत्त्वेन महदादिभ्यस्तत्त्वान्तरत्वं न तथा गोघटादीनां पृथिव्यादिभ्यस्तत्त्वान्तरत्वं, तेषां स्वोपादानपृथिव्यादिवृत्तिद्रव्यत्वसाक्षाद्व्याप्यपृथिवीत्वादिजातिमत्त्वेनोपादानावृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वाभावात् । घटादेरपि स्वोपादानमृदाद्यवृत्तिघटत्वादिजातिमत्त्वेन तत्त्वान्तरत्वापत्तेरतस्तद्वारणाय जातौ द्रव्यत्वसाक्षाद्व्याप्येति विशेषणमुपात्तम्।

ननु पृथिवीतद्विकारघटयोरुभयोरपि स्थूलत्वादिरूपसमानधर्मवत्त्वेन न पृथिव्यपेक्षया घटस्य तत्त्वान्तरत्वं, तथा महत्तद्विकाराहङ्कारयोरुभयोरपि सूक्ष्मत्वातीन्द्रियत्वादिरूपसमानधर्मवत्त्वेन समानतत्त्वात्मकत्वात् कथं महदपेक्षयाऽहङ्कारस्य तत्त्वान्तरत्वमिति चेदत्र ब्रूमः—स्थूलत्वेन्द्रियग्राह्यत्वसहकृतपदार्थविभाजकपृथिवीत्वरूपोपाधेः पृथिवीघटयोरुभयोरपि वृत्तित्वेन तयोः समानधर्मत्वात् न घटादेः पृथिव्यास्तत्त्वान्तरत्वमित्यर्थे तात्पर्येणोक्तदोषपरिहारात्, तथा च पृथिव्यादेस्तत्त्वान्तरपरिणामवत्त्वाभावान्न प्रकृतित्वमपि तु विकृतित्वमेवेति सुसम्पन्नम् । प्रकृति, प्रकृति–विकृति, विकृतिरूपम् (कारण, कारणकार्य, कार्यरूपम्) प्रकारत्रयमभिधाय तुरीयप्रकारमभिधातुमुक्तम्–"न कारणं वा पुरुषोऽस्ति कार्यम्" इत्यादिना, पुरुषः कस्यापि न प्रकृतिः ( कारणम् ) न वा कस्यापि विकृतिः ( कार्य्यम् ) अर्थात् तत्त्वान्तरानुपादानत्वे सति तत्त्वान्तरानुपादेयरूपः पुरुषः ।

सरलार्थ—कदापि मूलप्रकृतिः कस्यापि कार्यं न, अपि तु महदादिविकाराणां कारणमेव, महदहङ्कारौ पञ्च तन्मात्राणि तत्त्वानि कारणानि कार्य्याण्यपि, एकादशेन्द्रियाणि पञ्चमहाभूतानि च कार्य्याण्येव न कदापि कारणानि, पुरुषस्तु न कारणं कस्यापि, न वा कार्य्यं कस्यापि, स तु पुष्करपलाशवन्निर्लेपः ॥ ९ ॥

प्रकृतशास्त्राभिधेयविवेकानुयोगिभूतप्रतियोगिभूतप्रकृतिमहदादितत्त्वजातमभिधाय तत्त्वजातं न प्रमाणापेतमपितु प्रमाणोपेतमित्याशयेन प्रमाणनिरूपणमारभते—

प्रत्यक्षमाद्यञ्च ततोऽनुमानं
शाब्दं तृतीयं सुजनाभिनन्द्यम् ।
एतत्त्रयेऽन्यत्सकलं प्रमाणं
मेयस्य सिद्धिर्ननु मानतन्त्रा ॥ १० ॥

ननु कणभक्षाक्षपादादिभिः प्रमाणविशेषाणां निरूपितत्वात्तैरेव प्रकृते निर्वाहे प्रमाणनिरूपणं न प्रमोदास्पदमिति चेदत्रोच्यते—

प्रत्यक्षमनुमानञ्च शास्त्रं च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥

इति मनुना प्रमाणत्रयस्यैवाङ्गीकृतत्वेन तद्विपरीतेयत्तावन्तः कणभक्षादिनिरूपिताः प्रमाणभेदा न सतां सम्मता इत्येतादृशस्याभिप्रायस्याद्योतनाय प्रमाणनिरूपणं प्रमोदास्पदमेवेत्यनुसन्धेयम्—

सामान्यलक्षणं त्यक्त्वा विशेषस्यैव लक्षणम् ।
न शक्यं केवलं वक्तुमितोऽप्यस्य न वाच्यता ॥

( मी० सूत्र ५ श्लोकवार्तिके शब्दपरिच्छेदे श्लो० २ ) इति कुमारिलोक्तिमादृत्य प्रमाणसामान्यलक्षणं तावदावश्यकम्, अतः "सकृदुच्चरितमपि

प्रमाणपदं तन्त्रेणोच्चरितत्वात् प्रमाणं प्रमाणमिति द्विरावर्त्य प्रमाकरणं यत्तत्प्रमाणं—प्रमाणपदप्रतिपाद्यमित्यर्थमङ्गीकृत्यैकमेव प्रमाणपदं लक्ष्यलक्षणोभयपरमिति बोध्यम् । अर्थाल्लक्ष्यपदस्य लक्षणपदप्रयोगसापेक्षत्वाल्लक्षणपदमन्तरेण कथं लक्ष्यप्रयोग इत्याकाङ्क्षायां प्रमाणपदस्य यौगिकत्वेन तदवयवार्थमादाय लक्षणपदमपि तदेवेति स्वीकर्तव्यम् । प्रमाणपदावयवभूतप्रकृतिप्रत्ययार्थश्च लक्षणम् । प्रमीयते निश्चीयतेऽनेनेति प्रमाणं प्रमाकरणमिति यावदिति प्रमाणसामान्यलक्षणम् । संशयविपर्य्ययविकल्पस्मृतिरूपचित्तवृत्तीतरा या चित्तवृत्तिः सा च प्रमा, इयममुख्या च, चित्तवृत्तेः फलं यः पुरुषवर्ती बोधः सा मुख्या प्रमा । "द्वयोरेकतरस्य वाऽप्यसन्निकृष्टार्थपरिच्छित्तिः प्रमा" इति साङ्ख्यसूत्रे प्रमाद्वैविध्यस्याभिहितत्वेन बुद्धिवृत्तिः पौरुषेयबोधश्चेत्युभयमपि प्रमेति भावः । ननु चित्तवृत्तेः फलं पुरुषवर्ती बोधः कथं ? न हि निम्बगोचरव्यापारेण परशुना आम्रे छिदा दृश्यते, सामानाधिकरण्याभावादिति चेदत्रोच्यते—चित्तवृत्त्या पुरुषगतो बोधो न जन्यतेऽपितु चैतन्यमेव तत्तदर्थोपरक्तबुद्धिदर्पणप्रतिबिम्बितं सद् बुद्धिवृत्त्या अर्थाकारया तदाकारतापद्यमानं फलमित्युच्यते । तच्च चित्तप्रतिबिम्बितं फलभूतं चैतन्यं चितिचित्तयोरभेदग्रहाच्चित्तात्मकं प्रमाणभूता चित्तवृत्तिरपि चित्तात्मिकैवेति सामानाधिकरण्यसत्त्वादुचितं पौरुषेयबोधस्य चित्तवृत्तेः फलत्वमिति ।

## अत्रेदमवधेयम्

पुरुषवर्ती बोध इत्यनेन बोधस्य पुरुषवृत्तित्वं नोच्यते येन प्रमातृत्वादिधर्मेण पुंसःपरिणामित्वं भवेत् परन्तु बुद्धौ प्रतिबिम्बितत्वेन तत्तादात्म्यापत्त्या पुरुषस्य ज्ञानादिमत्त्वोपचारात् पौरुषेय बोध इत्युच्यते । एवञ्च चेतनचित्तयोरभेदग्रहात् पुरुषे आरोप्यमाणोऽपि वास्तविको बुद्धिवृत्त्यात्मक एव बोधो न तु पुरुषधर्म इति । एवञ्च यथा चन्द्रस्य क्रियां विनापि उपसङ्क्रान्तचन्द्रबिम्बममलं जलं स्वयं चलत्सदचलमपि चन्द्रबिम्बं चलमिवावद्योत-

यति एवं चितिक्रियां विनापि उपसङ्क्रान्तचितिप्रतिबिम्बबुद्धिरसङ्गामपि चितिशक्तिं स्वगतया ज्ञानादिक्रिययाऽवद्योतयन्ती सती प्रमातृत्वमापादयति। परमार्थतस्तु पुरुषस्य न प्रमातृत्वं न वा तन्निष्ठो बोधः फलमिति। एवं रीत्या चित्तवृत्तेस्तस्या यत्साधनं सन्निकर्षरूपव्यापारवच्चक्षुरादि, यच्च पौरुषेयबोधकरणं चित्तवृत्तिरूपं तदुभयमपि प्रमाणम्।

विज्ञानभिक्षवस्तु—न व्यापारवत्कारणं करणमपितु फलायोगव्यवच्छिन्नमेव कारणं करणमित्यभिप्रायेण यदि प्रमारूपं फलं पुरुषनिष्ठमात्रमाख्यायते तदा बुद्धिवृत्तिरेव प्रमाणम्, यदि च बुद्धिनिष्ठमात्रमुच्यते तदा तूक्तेन्द्रियसन्निकर्षादिरेव प्रमाणम्, यदि च पुरुषनिष्ठबोधो बुद्धिवृत्तिश्चेत्युभयमपि प्रमोच्यते तदा तूक्तमुभयमेव प्रमाभेदेन प्रमाणम्, चक्षुरादिषु तु प्रमाणव्यवहारः परम्परयैव सर्वथा ज्ञेय इति वदन्ति। प्रमाणेयत्तावधारणार्थं सङ्ख्याविप्रतिपत्तिं निराकरोति—"तृतीयम्" अर्थात् प्रत्यक्षमनुमानमागमं चेति त्रिविधमेव साङ्ख्यदर्शने प्रमाणं नाधिकं नवा न्यूनम्।

ननु "आम्नायविधातॄणामृषीणामतीतानागतवर्तमानेष्वतीन्द्रियेष्वर्थेषु धर्मादिषु ग्रन्थ उपनिबद्धेषु अनुपनिबद्धेषु चात्ममनसोः संयोगाद् धर्मविशेषाच्च यत्प्रातिभं यथार्थनिवेदनं ज्ञानमुत्पद्यते तदार्षमित्याचक्षते" इति गुणग्रन्थे बुद्ध्यधिकारे कणाददर्शने प्रशस्तपादाचार्यैरार्षविज्ञानस्याप्यधिकस्याभ्युपेतत्वेन कथं प्रमाणत्रैविध्याभिधानं सङ्गतमिति चेन्न योगिजनभिन्नसाधारणजनज्ञानजननोपयोगिप्रमाणत्रैविध्याभिधानस्य सुसङ्गतत्वात्।

आर्षविज्ञानस्यालौकिकत्वेन लोकोपयोगाभावादत्रानिरूपणेऽप्युपमानादीनां लोकोपकारित्वेनावश्यं निरूपणीयत्वेन तदनिरूपणप्रयुक्तन्यूनता कथं नेति जिज्ञासायाः शान्तय उच्यते—"एतत्त्रयेऽन्यत्सकलं प्रमाणम्" इति। एष्वेव प्रमाणेषु त्रिषु सर्वेषां प्रमाणानामन्तर्भाव इति।

पदवाक्यप्रमाणप्रमेयभेदभिन्नेषु व्याकरणमीमांसा-न्याय-कणाददर्शन-साङ्ख्य-योगवेदान्तदर्शनेषु विद्याप्रस्थानेषु साङ्ख्ययोगवेदान्तरूपप्रस्थान-त्रयस्य प्रमेयप्रतिपादनपरत्वादत्र प्रमाणप्रतिपादनं मनीषिसङ्केतपराहतम् इत्यविचाररमणीयस्यार्थस्य निरासायोक्तम्—

"मेयस्य सिद्धिर्ननु मानतन्त्रा" इति। प्रमेयावगतिः प्रमाणाधीना अतः प्राधान्येन प्रमेयप्रतिपादनपरमप्येतत्तन्त्रं तदुपयोगितया प्रसङ्गतः प्रमाणमपि प्रतिपादयतीति भावः।

सरलार्थः—प्रमेयज्ञानं प्रमाणाधीनं, साङ्ख्यनये प्रमाणं त्रिविधं प्रथमं प्रत्यक्षं, द्वितीयमनुमानं, तृतीयं शब्दप्रमाणमन्यत्रोक्तानामन्येषां प्रमाणाना-मपि एषु प्रमाणेष्वन्तर्भावो भवतीति भावः ॥ १० ॥

निखिलप्रमाणानामुपजीव्यत्वादनुमानादीनां प्रत्यक्षसापेक्षत्वात् प्राकृत-चार्वाकादेरपि प्रत्यक्षे विवादाभावात् सर्वसम्मतत्वाच्च सम्प्रति प्रत्यक्ष-प्रमाणस्य लक्षणमारभते—

विषयसन्निहितेन्द्रियमाश्रिता
यदि च निश्चितवृत्तिरहो धियः।
कपिलकीर्तितसाङ्ख्यनये तदा
प्रथममानमतिस्फुटमुच्यते ॥ ११ ॥

अत्र प्रथममानम् (प्रत्यक्षप्रमाणम्) इति लक्ष्यनिर्देशः, शेषभागो लक्षणम्। विषयोऽर्थो घटादिस्तेनसन्निहितं सम्बद्धम् इन्द्रियं चक्षुरादि, तदाश्रिता—तदधीना (विषयव्यापृतेन्द्रियाधीना) धियो बुद्धेर्निश्चयवृत्ति-र्निश्चयात्मको व्यापारो, ज्ञानं यदि यदा जायते, तदा तदेव ज्ञानं कपिल-कीर्तितसाङ्ख्यनये कपिलप्रवर्तितसाङ्ख्यशास्त्रे प्रथममानं प्रत्यक्षप्रमाणम् अतिस्फुटं सुस्पष्टमुच्यते कथ्यते। इन्द्रियमाश्रिता इत्यनेन निश्चयवृत्ति-

रिन्द्रियधर्म इति न भ्रमितव्यमपि तु इन्द्रियमाश्रित्य बुद्धौ वर्तमानतया बुद्धेरेव स धर्मोऽभ्युपेतव्यः। अर्थाद् निश्चयवृत्तिर्निश्चयात्मकव्यापारो ज्ञानं बुद्धेरेव व्यापारो नेन्द्रियधर्म इत्यर्थः।

यथा बीजजलकालमहीतलसंयोगादिसन्निधाने उत्पद्यमानोऽङ्कुरो न जलाङ्कुरः, कालाङ्कुरो, महीतलाङ्कुर इति वा व्यवह्रियते तस्य जलादेर्धर्मत्वाभावादपि तु बीजस्यैव व्यपदिश्यते यवाङ्कुरः शाल्यङ्कुर इति, तस्याङ्कुरस्य बीजधर्मत्वात्, तथा बुद्धिविषयेन्द्रियालोकसंयोगादिसन्निधानेनोत्पद्यमानं ज्ञानं नेन्द्रियधर्मो विषयधर्म आलोकधर्म इति वा व्यपदिश्यते, तस्य ज्ञानस्य इन्द्रियादिधर्मत्वाभावादपि तु बुद्धिधर्मत्वेन व्यवह्रियते बुद्धिवृत्तिरिति बुद्धिव्यापार इति भावः।

प्रतिबिम्बरूपेण लब्धो विषयो यैस्तेषामिन्द्रयाणां वृत्तौ सत्यां सन्निहितविषयाणामिन्द्रियाणां वृत्तौ सन्निकर्षे सति वा विषयाकाराकारितत्वे सति यो बुद्धेस्तमोरूपावरणतिरस्कारपुरःसरसत्त्वात्मकप्रकाशबाहुल्यरूपो धर्मविशेषः सोऽध्यवसाय इति वृत्तिरिति ज्ञानमिति चोच्यत इत्यर्थः।

ननु सन्निहितविषयाणामित्यादिना विषयेन्द्रियसन्निकर्षजन्यस्यैव बुद्धेः—सत्त्वोद्रेकस्य वृत्तिलक्षणत्वे लिङ्गादिजन्यानुमानादिवृत्तेरिन्द्रियजन्यत्वाभावेन तत्र वृत्तिलक्षणमव्याप्तमिति चेन्न, तमोऽभिभवसमसभयभवो यो बुद्धेः सत्त्वसमुद्रेकः स एव वृत्तिपदार्थत्वेनात्राभिप्रेतो नान्यत्तस्येन्द्रियसन्निकर्षादिस्तमोनिरसनमुखेन वृत्त्युत्पत्तिहेतुत्वेऽपि वृत्तिलक्षणाघटकत्वात्, तेन आगमानुमानवृत्तिषु न वृत्तिलक्षणाव्याप्तिरिति भावः।

अत्रेदमवधेयम्—

यथा स्वाभाविकचलनशीलमपि जलाशयस्थं सलिलं निःसरणपथाभावरूपप्रतिबन्धकबलात् स्वयं क्षेत्रमगच्छदपि छिद्रे कृते सति निःसृत्य कुल्याद्वारा क्षेत्रं प्राप्य केदाराकारेण परिणमते तथा स्वाभाविकसर्वार्थग्रहण-

समर्थमपि बुद्धितत्त्वं तमसाच्छन्नं सत्स्वयं विषयमगच्छदपीन्द्रियार्थसन्निकर्षादिना तमोनिरासे इन्द्रियप्रणालिकया विषयमनुप्राप्य विषयाकारेण परिणमते, योऽयं बुद्धितत्त्वस्य विषयाकारपरिणामः स एव वृत्तिरिति ज्ञानमिति, अध्यवसाय इति च व्यपदिश्यते।

परन्तत्रैतावान् विशेषः—इद्रियसन्निकर्षद्वारा यस्तमोऽभिभवसमकालसत्त्वसमुद्रेकप्रयुक्तो बुद्धेर्विषयाकारपरिणामः स प्रत्यक्षप्रमाणं, व्याप्तिज्ञानजन्यो विषयप्रकाशकः सत्त्वोद्रेकस्तत्प्रयुक्तो बुद्धेर्विषयाकारपरिणामः सोऽनुमानप्रमाणं, वाक्यजन्यश्च यस्तादृशः परिणामविशेषः स आगमप्रमाणमिति व्यपदिश्यते।

नन्वन्तःकरणस्य चित्तस्य निरंशत्वेन चेदनवदपरिणामित्वात् कथं विषयाकारपरिणामशीलता तस्येति चेन्न अव्यक्तवन्निरवयवत्वेऽपि परिणामित्वोपपत्तेः। अपरिणामित्वे च चेतनत्वमपेक्षितं न निरंशत्वमिति भावः। परमार्थतस्तु "हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गं, सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम्" इति साङ्ख्यसिद्धान्ताद् अव्यक्तातिरिक्तस्य सर्वस्यैव बुद्ध्यादेः सांशत्वेन मध्यमपरिमाणत्वान्न विषयाकारपरिणामानुपपत्तिः, मध्यमपरिमाणत्वेऽप्यतिनिर्मलविरलतैजसद्रव्यत्वेन दिवाकरकरवत् सत्वरप्रसरोपपत्तेर्न विलम्बेन विप्रकृष्टध्रुवादिविषयावभासानुपपत्तिः, ध्रुवादिविषयपर्य्यन्तव्रजनेऽप्यच्छिन्नमूलसन्तानाङ्गीकारेणान्तःकरणस्य देहसम्बन्धसत्त्वान्न शरीरस्य निर्जीवत्वापत्तिरित्यपि बोध्यम्।

यद्यपि पूर्वं चित्तवृत्तिः पौरुषेयबोधश्चेति प्रमाद्वयी प्रतिपादिता तथापि योगभाष्ये पौरुषेयबोधस्यैव फलत्वकथनेन प्रमाद्वयीस्वीकारोऽनावश्यक इति चित्तवृत्तेः प्रमाणत्वं, पौरुषेयबोधस्य च प्रमात्वमितिप्रमैक्यमुक्तमितिध्येयम्। अत एव "द्वयोरेकतरस्य वा" इत्यनियमोऽभिहितो वाकारेण सूत्रकारेण।

अत्र लक्षणे निश्चयवृत्तिपदेन संशयस्य निरासः सूचितः संशयस्यानध्यवसायत्वेनानिश्चयरूपत्वात्। विषयपदेन मिथ्याज्ञानात्मकस्य विपर्य्य-

यस्य निराकरणं वेदितव्यम् । सन्निहितपदेन अनुमानस्मृत्यादीनां व्यावृत्तिः । समानजातीयानां संशयादीनामसमानजातीयानामनुमानस्मृत्यादीनां च व्यावर्तकत्वाद् विषयसन्निहितेन्द्रियाश्रिता बुद्धेर्निश्चयवृत्तिरिति प्रत्यक्षस्य दोषरहितं लक्षणं सम्पन्नम् ।

सरलार्थः—कपिलप्रवर्तितसाङ्ख्यदर्शने अर्थसन्निकृष्टेन्द्रियाश्रितं बुद्धेर्निश्चयात्मकं ज्ञानमेव प्रत्यक्षप्रमाणम्, अर्थाद् इन्द्रियसन्निकर्षादिनोत्पद्यमानमयं घट इत्यादि बौद्धो बोधः प्रत्यक्षप्रमाणम्, तदनन्तरमुत्पद्यमानं घटमहंजानामीत्यादिपौरुषेयबोधश्च प्रत्यक्षप्रमेति भावः ॥ ११ ॥

प्रत्यक्षेण परपुरुषगताज्ञानादेर्निश्चयो न सम्भवति ततश्च चर्वाकेणापि परपुरुषस्थाज्ञानादयोऽनुमातव्या इत्यकामेनापि तेन अनुमानप्रमाणमङ्गीकरणीयमिति भेदपुरःसरं साङ्ख्योक्तानुमानप्रमाणलक्षणमिदानीमुच्यते—

**मानं द्वितीयं त्रिविधं यदुक्तं**
**तद्व्यापकव्याप्यविवेकतन्त्रम् ।**
**निर्दोषवाक्याज्जनितार्थबुद्धिः**
**शाब्दं प्रमाणं कथितं तृतीयम् ॥१२॥**

प्रत्यक्षजन्यत्वादनुमानप्रमाणं प्रत्यक्षप्रमाणनिरूपणानन्तरं निरूपणीयं तत्रापि सामान्यलक्षणपूर्वकत्वाद् विशेषलक्षणस्येति अनुमानसामान्यं तावल्लक्षयति—"तद्व्यापकव्याप्यविवेकतन्त्रम्" व्यापकं लिङ्गि व्याप्यञ्च लिङ्गं तद्विवेकाधीनं यज्ज्ञानं तदनुमानम् । लिङ्ग्यते गम्यते ज्ञायतेऽप्रत्यक्षोऽर्थोऽनेनेति लिङ्गम्—

**"यदनुमेयेन सम्बद्धं प्रसिद्धं च तदन्विते ।**
**तदभावे च नास्त्येव तल्लिङ्गमनुमापकम्" ॥**

अनुमेयः प्रतिपिपादयिषितधर्मविशिष्टो धर्मी पर्वतादिः पक्षस्तेन सम्बद्धं तस्मिन् वर्तमानं पक्षवृत्तीत्यर्थः, तदन्विते साध्यधर्मान्विते सपक्षे महानसादौ

प्रसिद्धं सपक्षवृत्तीत्यर्थः, तदभावे साध्यधर्मस्याभावे विपक्षे जलह्रादादौ नास्ति विपक्षावृत्तीत्यर्थः, इति प्रशस्तपादरीत्या पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वादिधर्मोपपन्नं धूमादिवस्तु लिङ्गम्। एतदेव च पक्षवृत्तित्वादिधर्मैर्व्याप्यमानत्वाद् व्याप्यमित्यभिधीयते। यस्य च वह्न्यादेस्तद्धूमादिलिङ्गमस्ति तद्वह्न्यादिलिङ्गि व्यापकमितिचोच्यत इति भावः। सामान्यतो लक्षितमनुमानं विशेषतस्त्रिविधमित्यत उक्तम् "त्रिविधम्" इति व्याप्यव्यापकज्ञानाधीनं यज्ज्ञानमनुमानात्मकं तत् त्रिविधम्—पूर्ववत्, शेषवत्, सामान्यतोदृष्टं च।

अक्षपाददर्शने "अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत्सामन्यतोदृष्टं च" इति सूत्रेऽनुमानस्य त्रैविध्यं प्रदर्शितं तदेवात्रापि स्वीक्रियते। पूर्ववदादिभेदेनानुमानस्य त्रैविध्ये सत्यपि प्रथममनुमानं द्विविधं ततो द्विविधमध्ये एकं द्विविधम्, एकञ्च एकविधमित्येवं त्रिविधं ध्येयम्, तथाहि—प्रथमं तावद् द्विविधं वीतमवीतं च। अन्वयमुखेन प्रवर्तमानं विधायकं वीतम्, व्यतिरेकमुखेन प्रवर्तमानं निषेधकमवीतम्। तत्रावीतं शेषवत्—शिष्यते परिशिष्यत इति शेषः स एव विषयतया यस्यानुमानज्ञानस्यास्ति तच्छेषवत्, व्यतिरेकीति यावत्।

वीतञ्च द्विविधम्—पूर्ववत् सामान्यतोदृष्टञ्च। दृष्टं पूर्वमधिगतं स्वलक्षणमसाधारणं रूपं यस्य सामान्यस्य, तद् दृष्टस्वलक्षणसामान्यं, तद्विषयकं यज्ज्ञानं तत्पूर्ववदनुमानम्। यथा धूमाद् वह्नित्वसामान्यविशेषः पर्वतेऽनुमीयते। तस्य च वह्नित्वसामान्यस्य स्वलक्षणं वह्निविशेषे दृष्टः।

ननु कथं वह्नित्वस्य सामान्यविशेषोभयात्मकत्वमिति चेदत्रोच्यते—अत्यन्तव्यावृत्तानां तत्त्वानां यतः कारणादन्योऽन्यस्वरूपानुगमः प्रतीयते तत्सामान्यमित्युच्यते, तच्च द्विविधमेकं द्रव्यादित्रिकवृत्ति सत्ताख्यं परम्, एतच्च स्वाश्रयस्यानुवृत्तेरेव हेतुत्वात् सामान्यमित्येव कीर्त्यते, द्रव्यत्वपृथिवीत्वगोत्वादिरूपमपरं सामान्यम्, एतच्च स्वाश्रयस्य विजातीयेभ्योऽपि

व्यावृत्तेरपि हेतुत्वाद् विशेष इत्यपि व्यपदिश्यते । तथा च सिद्धं वह्नित्वादेः सामान्यविशेषरूपत्वम् ।

अपरं च वीतं सामान्यतोदृष्टम्—अदृष्टस्वलक्षणसामान्यविषयं न दृष्टं स्वलक्षणं यस्य सामान्यस्य तत्तथा तद्विषयमित्यर्थः । रूपादिज्ञानानि करणवन्ति क्रियात्वात्, छिदिक्रियावदितीन्द्रियसाधकमनुमानं सामान्यतोदृष्टमिति ।

ननु छेदनादिकर्मणि कुठारादिस्वलक्षणस्य करणस्य दृष्टत्वादिदमपि दृष्टस्वलक्षणसामान्यविषयत्वान्न पूर्ववतोऽतिरिक्तमितिचेन्न सामान्यतो दृष्टत्वेऽपि विशेषेणादृष्टत्वात् । रूपादिज्ञाने यज्जातीयस्य करणत्वमनुमेयं तादृग्जातीयस्य करणस्य प्रत्यक्षेण अदृष्टत्वादित्यर्थः । यथा वह्नित्वसामान्यस्य स्वलक्षणं वह्निरध्यक्षगोचरो न तथा इन्द्रियत्वसामान्यस्य स्वलक्षणमिन्द्रियमर्वाग्दृशामयोगिनामस्माकमध्यक्षविषयो निरवयत्वेनातीन्द्रियत्वात् । तस्मात् सम्पन्नं पूर्ववतोऽनुमानादस्य पृथक्त्वमिति तत्त्वम् ।

प्रयोजकवृद्धप्रयुक्तघटमानयेत्यादिवाक्यश्रवणानन्तरं प्रयोज्यवृद्धस्य घटानयनमुपलभ्य समीपस्थो व्युत्पित्सुर्बाल इत्थमनुमिनोति—इदं घटानयनं प्रवृत्तिसाध्यं चेष्टात्वात्, मदीयस्तनपानचेष्टावत् तत्पश्चाद् अयं प्रवर्तकप्रत्यय आचार्य्योच्चरितवाक्यजन्यस्तदनन्तरभावित्वादित्येवं प्रवर्तकप्रत्यये शब्दपूर्वकत्वमनुमाय तयोः शब्दयोः सन्निवेशे बोधस्य च दर्शनेन प्रथमतो वाक्यार्थे वाक्यस्य शक्ति निश्चिनोति ततो घटमपसारय पटमानय इत्येवं घटानयनशब्दयोः परित्यागेन घटानयनार्थयोरपि परित्यक्ततयान्वयव्यतिरेकाभ्यां घटादिविशेषेषु घटादिपदविशेषाणां शक्ति गृह्णाति इति सुस्पष्टं शब्दस्यार्थप्रत्यायकत्वमनुमानपूर्वकमेवेत्यनुमानप्रमाणलक्षणं निरूप्येदानीं शब्दप्रमाणलक्षणमारभते—

"निर्दोषवाक्याज्जनितार्थबुद्धिः" इत्यादिना। निर्दोषवाक्यं वेदवाक्यं तस्यापौरुषेयतया सकलदोषाशङ्काविनिर्मुक्तत्वात् तज्जनितार्थबुद्धिः—अर्थज्ञानं तृतीयं प्रमाणं शब्दप्रमाणम्।

भ्रमश्च—उच्चारणीयवाक्यार्थगोचरो भ्रमः, प्रमादोऽनवधानता सा च वाक्यर्थज्ञानस्वरूपयोग्यस्य वक्तुरुच्चारणीयवाक्यार्थनिश्चयव्यतिरेकः, शुकीयवाक्यार्थनिश्चयवारणायषष्ठ्यन्तनिवेशोऽन्यथाप्रतीतस्यार्थस्यान्यथाप्रतिपिपादयिषा प्रतारणा सैव विप्रलिप्सा, इच्छाविषयीभूतपूर्ववर्णानुकूलकण्ठताल्वाद्यभिघातानुत्पादकालीनापरवर्णानुकूलकण्ठताल्वाद्यभिघातः करणापाटवम्, करणं कण्ठताल्वाद्यभिघातः तस्यापाटवम्—असामर्थ्यम् इच्छाविषयीभूतवर्णाननुकूलत्वमितियावदित्येतत्स्वरूपाः सकला ये भ्रमप्रमादविप्रलिप्साकरणापाटवादयःपुरुषदोषास्तेषां याऽशङ्का सम्भावनामात्रेण प्रसक्तिस्तस्या विरहाद् अयुक्तत्वापादकपुरुषदोषराहित्याद् वेदवाक्यस्य निर्दोषत्वमितिध्येयम्।

कापिले नये जैमिनीये नये च ईश्वरानङ्गीकाराद् वेदस्य पुरुषविशेषेश्वरप्रणीतत्वाभावेनापौरुषेयत्वं बोध्यम्। तथा च सूत्रम्—

**"न पौरुषेयत्वं तत्कर्तुः पुरुषस्याभावात्"।**

एवञ्च प्रणेतृपुरुषाभावेन निराश्रयाणां दोषाणां वेदेऽभाव इति, अपौरुषेयं इत्यनेन ज्ञेयम्। तदुक्तम् चोदनासूत्रे "यद्वा वक्तुरभावेन न स्युर्दोषा निराश्रयाः" ६६॥

तथा च वाक्यजन्यं ज्ञानं द्विधमेकमन्यप्रमाणनिरपेक्षस्वार्थबोधनसमर्थमाम्नायवाक्यजन्यं स्वतःप्रमाणम्, अपरं चाम्नायरूपमूलप्रमाणसापेक्षस्मृत्यादिवाक्यजन्यं परतःप्रमाणम्। एवञ्चापौरुषेयाम्नायवाक्यजन्यत्वेन निरस्तसमस्तदोषाशङ्कतया युक्तमाम्नायवाक्यजन्यस्य ज्ञानस्य युक्तत्वम्। वेदमूलकत्वेन च स्मृतीतिहासपुराणवाक्यजनितस्य ज्ञानस्यापि युक्तत्वमवधेयमतस्तदपि शब्दप्रमाणत्वेन परिगृहीतम्।

एतस्य शब्दप्रमाणस्य प्रत्यक्षानुमानाभ्यां भिन्नस्यानुमानेऽन्तर्भावः कर्तुं न शक्यते, तथाहि—इदं वाक्यं संसृष्टार्थज्ञापकमाप्तवाक्यत्वाद् वाक्यान्तरवदित्येवं परस्परपदार्थसंसर्गरूपो वाक्यार्थ एव प्रमेयोऽनुमानेन मेयः स घासम्भवी, वाक्यत्वस्य लिङ्गत्वासम्भवात् ।

यथा प्रमेयवह्नेर्धर्मो धूमो न तथा प्रमेयवाक्यार्थस्य धर्मो वाक्यं येन तद् वाक्यार्थस्य लिङ्गं भवेदिति । एतच्च "पदानामेव पदार्थस्मरणावान्तरव्यापाराणां वाक्यार्थप्रमां प्रति करणतया प्रमाणत्वात् तेषां चापक्षधर्मतया लिङ्गत्वानुपपत्तेः" इत्यादिना तात्पर्यटीकायां, "कथञ्च पक्षधर्मत्वं शब्दस्येह निरूप्यते" इत्यादिना श्लोकवार्तिके च सुस्पष्टम् ।

ननु मेघोन्नमनादिना वर्षणादेरनुमेयत्वदर्शनान्न धर्मधर्मिणोरेव लिङ्गलिङ्गिभावनियमोऽपितु ययोरव्यभिचरितसहचाररूपसम्बन्धग्रहणं तयोर्लिङ्गलिङ्गिभावनियमः, तथा च यथा धूमधूमध्वजयोस्तादृशसम्बन्धग्रहणात् स, तथा वाक्यवाक्यार्थयोरपि तादृशसम्बन्धग्रहणात् कथं न वाक्यवाक्यार्थयोर्लिङ्गलिङ्गिभाव इति चेन्न वाक्यं वाक्यार्थं बोधयत् सम्बन्धग्रहणं नापेक्षत अभिनवकविविरचितस्य वाक्यस्यादृष्टपूर्वार्थिकस्याननुभूतचरवाक्यार्थबोधकत्वात् ।

यथा पर्वते वह्निं बोधयन् धूमः पूर्वं महानसादौ वह्निना सह स्वसम्बन्धग्रहणमपेक्षते तथा वाक्यं स्वार्थं बोधयत् पूर्वकालिकसम्बन्धग्रहणं नापेक्षत इत्यर्थः । तथा चोक्तम्—प्रकरणपञ्चिकायां प्रमाणपारायणे पञ्चमे प्रकरणे शालिकनाथमिश्रेण—"नह्यत्र गम्येनार्थेन गमकशब्दस्य सम्बन्धनियमोऽवगतो नापि गम्यार्थस्य किञ्चित्प्रत्येकदेशत्वं नापि च गमकस्येति सामग्रीभेदादनुमानशङ्कापि नास्ति" इति ।

सरलार्थः—व्याप्यव्यापकभावज्ञानपुरःसरं यद् व्याप्यस्य पक्षवृत्तित्वज्ञानं तत्पूर्वकं यज्ज्ञानं तदनुमानं तच्च पूर्ववच्छेषवत्सामान्यतोदृष्टभेदात् त्रिविधम्, अपौरुषेयत्वेन समस्तदोषरहितं यद् वेदवाक्यं तज्जनितमर्थ-

ज्ञानं तन्मूलकानि यानि स्मृतिपुराणेतिहासादीनि वाक्यानि, तज्जनितमर्थ-ज्ञानं च साङ्ख्यशास्त्रे शब्दप्रमाणत्वेन गण्यते ॥१२॥

साङ्ख्ये व्यक्ताव्यक्तज्ञभेदेन निखिलं प्रमेयं त्रिधा विभक्तं तत्र यद् व्यक्तं पृथिव्यादि तत्स्वरूपतः कटपटघटात्मकस्थूलरूपेण धूलिधूसरितचरणो हलवहनशीलो निरक्षरोऽपि नरः प्रत्यक्षतः प्रतिपद्यते, एवं पूर्ववन्नामकेनानुमानेन व्यवहितानि वह्न्यादीन्यपि प्रतिपद्यते ।

तथा च यदि तद्व्युत्पादनायैतच्छास्त्रं स्यात्तर्हि मन्दप्रयोजनमल्पफलं निष्फलं वा स्यादतः शास्त्रस्य सफलत्वाय दुखबोधं निरक्षरनराविदित-मव्यक्तादिकमेवानेन तन्त्रेण व्युत्पादनीयं न व्यक्तमिति । तथा च अव्यक्तं ज्ञश्चैतत्तन्त्रनिरूपणीयं मुख्यं प्रमेयमिति । एवञ्च व्यक्तस्याप्रतिपाद्यत्वेऽव्यक्तपुरुषयोश्च प्रतिपाद्यत्वे दृढे जाते प्रधानादिमध्ये यस्मिन् अतीन्द्रिये यत्प्रमाणं शक्तं तत्प्रमाणमुक्तस्वरूपेभ्यः प्रमाणेभ्यःपृथक्कृत्य प्रदर्शयति प्रसङ्गतश्च प्रत्यक्षप्रमाणस्यापि सार्थक्यं द्रढयति—

**प्रतीयते स्थूलपदार्थमात्रं**
**प्रत्यक्षतोऽतीन्द्रियवस्तुजातम् ।**
**प्रयाति सिद्धिं ह्यनुमानमानात्**
**सिद्धं ततोऽसिद्धमनिन्द्यवाक्यात् ॥१३॥**

प्रत्यक्षतः—प्रत्यक्षप्रमाणात्, स्थूलपदार्थमात्रं—बाह्यस्थूलवस्तुमात्रं प्रतीयते—ज्ञायते । नापि प्रत्यक्षात्प्रधानादीनां प्रतीतिर्नापि पूर्ववदनुमानादपि तु सामान्यतोदृष्टादनुमानात्, तथा च साङ्ख्यसूत्रं "सामान्यतो दृष्टादुभय-सिद्धिः" इति, एतदेव बोधयितुमुच्यते "अतीन्द्रियवस्तुजातं प्रयाति सिद्धिं ह्यनुमानमानात्" इति, अत्रानुमानपदं सामान्यतोदृष्टानुमानपरमिति बोध्यम्, साङ्ख्यनये बुद्धिवृत्तेरेव प्रमाणत्वाल्लिङ्गज्ञानजन्यबौद्धबोधात्मकसामान्य-

तोदृष्टानुमानादतीन्द्रियाणां प्रधानादीनां प्रतीतिः पौरुषेयबोधात्मकफलरूपा-नुमितिरितिभावः ।

तन्मात्रेन्द्रियाण्यभिमानवद्द्रव्योपादानकानि, अभिमानकार्यद्रव्यत्वात्, यन्नैवं तन्नैवं यथा ज्ञ इत्येवं शेषवदनुमानादपि केषाञ्चिदतीन्द्रियाणां प्रतीतेः सत्त्वाद्ऽनुमानपदं शेषवदनुमानपरमपि ज्ञेयम् । सामान्यतोदृष्टाच्छेषवदनु-मानाच्च यदसिद्धं यथा यत्र प्रकृतेर्महान् महतोऽहंङ्कार इत्याद्याविर्भावक्रमे परोक्षे स्वर्गादिपरलोके धर्माधर्मयोरिन्द्रादिदेवतासु यागादीनां स्वर्गादिसाध-नत्वे, क्षीरसमुद्रादौ चानुमानादीनां प्रमाणानां गतिर्नास्ति तत्र कस्य प्रमाणस्य सार्थक्यमिति बोधयितुमुच्यते—

"सिद्धं, ततोऽसिद्धमनिन्द्यवाक्यात्" इति ।

तस्मात् सामान्यतोदृष्टानुमानाच्छेषवदनुमानाच्च यदतीन्द्रियं पूर्वोक्त-मसिद्धमप्रतीतं भवेत्तदनिन्द्यवाक्यात्मकागमप्रमाणात् सिद्धं भवतीति भावः ।

सरलार्थः—बाह्यस्थूलपदार्थानां प्रत्यक्षप्रमाणात् प्रतीतिः, अतीन्द्रि याणां प्रधानादीनां सामान्यतोदृष्टानुमानाच्छेषवदनुमानाच्च प्रतीतिः, ताभ्यामप्रतीयमानानां स्वर्गादीनामागमप्रमाणात् प्रतीतिः ॥ १३ ॥

आकाशकुसुमकूर्मरोमसरीसृपश्रवणकमठीस्तनशशविषाणादिषु प्रत्यक्षम-प्रवर्तमानं तदभावमवबोधयति यथा, तथैव प्रधानादिषु प्रत्यक्षमप्रवर्तमानं प्रधानाद्यभावमवबोधयेत् तत्कथं सामान्यतोदृष्टादिभ्यः तत्सिद्धिरिति-विभीषिकाया विघटनायेदमुच्यते—

सदपि वस्त्वतिदूरसमीपगं
व्यवहितं बहुसूक्ष्मतिरस्कृतम् ।
न समभीलितमीक्ष्यत इन्द्रियं
प्रतिहतञ्च मनोऽस्थिरमस्तिचेत् ॥ १४ ॥

सदपि वस्तु—विद्यमानमपि पतत्रिरूपं वस्तु अतिदूरगं—गगने उड्डीयमानमत्यूर्ध्वं गतमतिदूरतया न ईक्ष्यते—नावलोक्यते। अयं दूरत्वदोषः क्वाचित्क एव, तेन दिवाकरादिमण्डलदर्शने न व्यभिचारः। नेत्रस्थमञ्जनमतिसमीपगम्—अतिसमीपस्थमपि, अतिसमीपतया नेक्ष्यते—नावलोक्यते, व्यवहितं—भित्त्यादिव्यवहितं राजदारादि नेक्ष्यते न दृश्यते। बहुसूक्ष्मं—निरवयवोऽतिलघुपरिमाणकः परमाणुरिन्द्रियसम्बद्धोऽपि स्थिरचित्तेनापि गुरुपेण नेक्ष्यते—नावलोक्यते, तिरस्कृतम्—अहनि दिवाकरप्रभाभिरभिभूतं ग्रहनक्षत्रमण्डलं नेक्ष्यते न दृश्यते। सममीलितं—वारिदविमुक्तजलकणो जलाशयस्थोऽपि नेक्ष्यते, इन्द्रियं प्रतिहतम्—अन्धत्वबधिरत्वादिदोषेण-नष्टं—नष्टशक्तिकमिन्द्रियं नेत्रादि रूपादिकं न पश्यतीतिभावः, मनोऽस्थिरम्—इतरव्यासङ्गेनेन्द्रियसम्बन्धाभावात् कामादिविकारेण अस्थिरं दूषितं च यस्य मनः स प्रचण्डत्वेन विस्तारमवाप्तो य आलोकः सूर्यादिप्रकाशस्तदभ्यन्तरे वर्तमानमपि वस्तु न पश्यति। प्रतिहतञ्चेत्यत्र चकारोऽनुक्तसमुच्चयार्थकः, तेनानुद्भूतमपि वस्तु संगृहीतं तथाच दुग्धावस्थायामनागतावस्थायां सूक्ष्मरूपेण स्वोपादानेऽवस्थितमपि दध्यादि नेक्ष्यत इति भावः।

## अत्रेदमवधेयम्—

प्रत्यक्षाविषयत्वाद् वस्त्वभावो न भवति नहि गेहाद् बहिर्गतस्यानवलोकनेन तदभावो भवति, अपितु सावयवत्वादिसामग्रीसमवधानेन प्रत्यक्षयोग्यं यद् वस्तु तत्र प्रत्यक्षनिवृत्तेः कश्चनापि जनोऽभावं विनिश्चिनोति यथा सावयवानां शृङ्गादीनां शशादौ, प्रधानादीनाञ्च निरवयवत्वेन प्रत्यक्षयोग्यतैव नास्ति, इति प्रत्यक्षाविषयत्वमात्रेण तेषामभावस्य निश्चयः कर्तुं न शक्यते।

सरलार्थः—अतिदूरगम् अतिसमीपगञ्च वर्तमानमपि वस्तु अतिदूरत्वदोषमहिम्ना अतिसामीप्यदोषमहिम्ना च नावबुध्यते यथा गगनेऽतिदूरं गत उड्डीयमानः पक्षी, नेत्रस्थमञ्जनञ्च। भित्त्यादिपिहितं वस्तु राज-

दारादि नावलोक्यते अतिलघुपरिमाणकः परमाणुर्निरवयवोऽतिसूक्ष्मत्व-दोषमहिम्ना अवहितचेतसापि नावलोक्यते, दिवाकरप्रभाभिभूतं ग्रहनक्षत्र-मण्डलं तिरस्कृतत्वदोषमहिम्ना नावबुध्यते, मेघविमुक्तजलकणो जलाशयस्थः सन्नपि नावबुध्यते सममीलितत्वदोषमहिम्ना। स्वशक्तिहीनं विनष्टशक्ति-कमिन्द्रियं न समर्थं स्वक्रियायां प्रतिहतत्वदोषमहिम्ना, कामादिविकारविकृत-मनस्कः प्रचण्डसूर्यालोकेऽवस्थितमपि वस्तु नावलोकयति मनोऽस्थिरत्वदोष-महिम्ना। एवं दुग्धावस्थायां दध्यादि नावबुध्यते अनुद्भूतत्वदोषमहिम्ना ॥१४॥

उक्तेषु कारणेष्वेतेषु कतमत्कारणं प्रधानादीनामप्रतीतौ, इत्यत उक्तम्—

**सूक्ष्मत्वात्प्रकृतिस्तथाच पुरुषोऽदृश्योऽस्ति नोऽभावतः**
**कार्यात्किन्तु तयोस्तु लब्धिरजयोः साङ्ख्ये मते जायते।**
**आद्यायाः प्रकृतेर्गतं विषमतां साम्यञ्च संलक्ष्यते**
**कार्य्यं तन्महदादितत्त्वमखिलं स्थूलं च कृत्स्नं जगत् ॥१५॥**

सूक्ष्मत्वात्—निरवयत्वरूपसूक्ष्मत्वात् प्रकृतिरदृश्या तथा पुरुषश्चा-दृश्योऽस्ति। अर्थाद् निरवयवत्वरूपसूक्ष्मत्वात् प्रधानादीनामनुपलब्धिः। ननु षड्विधाम्लादिरसातिरिक्तः सप्तमो रसो यथा अभावादेव न प्राप्यते न तु सूक्ष्मत्वात्तथा प्रधानादीनामप्यभावादेवानुपलब्धिः कुतो नेत्यत उक्तम्—"नोऽभावतः" इति। न तु सप्तमरसवदभावादनुपलब्धिरर्थाद-भावान्नानुपलब्धिः प्रकृतिपुरुषयोरपि तु सूक्ष्मत्वात्। प्रकृतेरुपलब्धौ तत्र को हेतुरिति जिज्ञासायाम्—"कार्य्यात्किन्तु तयोस्तु लब्धिरजयोः साङ्ख्ये मते जायते, आद्यायाः प्रकृतेः" इति। कार्य्यात्—महत्तत्त्वादिकार्य्यलिङ्ग-कानुमानात् तयोरजयोः—प्रधानपुरुषयोर्मध्ये आद्यायाःमूलभूतायाः प्रकृते-र्लब्धिः—उपलब्धिः साङ्ख्ये मते—साङ्ख्ये दर्शने जायते—भवति। तयोरजयो-रित्यत्र निर्धारणे सप्तमी बोध्या, यतो हि पुरुषस्याकारणत्वेन तत्कार्य्याभावात्

कार्य्यलिङ्गकानुमानेन पुरुषोपलब्धिर्वक्तुमशक्या, तर्हि पुरुषोपलब्धिः कुत इति पुरुषोपलब्धौ प्रमाणं वक्ष्यते—"पुंसोऽतिरिक्तं सकलं परस्मै इति।

## अत्रेदमवधेयम्—

प्रबलतरानुमानादिप्रमाणेन निर्णीते हि प्रधानादौ यत्प्रत्यक्षं न प्रवर्तते, तत्प्रधानादीनां निरवयवत्वेन तत्र योग्यताभावान्न प्रवर्तते न तु स्वरूपतोऽभावादिति कल्प्यते, सप्तमस्तु रसो न केनापि प्रमाणेन निर्णीत इत्यतस्तत्र सप्तमे रसे प्रत्यक्षस्यायोग्यता निश्चेतुं न शक्येत्यर्थः। अभावादेव सप्तमे रसे प्रत्यक्षं न प्रवर्तते न त्वयोग्यत्वादिति विशेष इत्यभिप्रायः। किं पुंनस्तत्कार्य्यं यतोऽव्यक्तानुमानमित्यत उक्तम्—"कार्य्यं तन्महदादितत्त्वमखिलं स्थूलं च कृत्स्नं जगत्" इति। महदादितत्त्वम्—बुद्ध्यादितत्त्वं तत्कार्यं स्थूलं स्पष्टतया प्रतीयमानं कृत्स्नं—सम्पूर्णं जगच्च, यत्कार्य्यलिङ्गकानुमानेन प्रधानोपलब्धिः, तस्य कार्य्यस्य विवेकज्ञानोपयोगिनी सारूप्यवैरूप्ये सूचयितुमुक्तम्—"गतं विषमतां साम्यञ्च संलक्ष्यते" इति। विषमताम्—वैरूप्यम्, साम्यञ्च—सारूप्यञ्च गतम्—अवाप्तम्, संलक्ष्यते—अनुभूयते। एते विभजनीये सारूप्यवैरूप्ये "सकारणं व्यक्तमनित्यरूपम्" इत्यादिव्याख्यावसरे द्रष्टव्ये।

## अत्रेदमाकूतम्—

कस्यापि कार्य्यस्य साक्षात्कारादेतावदेवानुमीयते यदस्य कार्य्यस्य किञ्चित्कारणं न त्वेतदेव कारणमिति। कारणस्वरूपनिर्वचनविषये च दार्शनिकानां परस्परं महान् मतभेदः।

तथाहि—असतः सज्जायतेऽर्थाद् विनष्टाद्धि किल बीजादङ्कुरो नष्टाच्च दुग्धाद् दधि, विनष्टाच्च मृत्पिण्डाद् घट इत्येवमभावग्रस्तेभ्यो बीजादिभ्योऽङ्कुराद्युत्पाददर्शनात् सर्वे कार्य्यरूपा भावा अभावकारणकाः कार्य्यत्वाद् बीजनाशोत्तरोत्पन्नाङ्कुरवदिति शून्यवादिनो बौद्धाः। उक्तञ्च—'अभा-

वाद् भावोत्पत्तिर्नानुपमृद्यप्रादुर्भावात् ( न्यायदर्शने ) अ० ४ आ० १ सू० १४। प्रकृतौ द्वौ नञौ प्रकृतार्थं द्रढयतः, बीजमुपमृद्यैवाङ्कुर-प्रादुर्भाव इति।

अद्वैतवेदान्तिनः—एकस्य सतो विवर्तः कार्य्यजातं न वस्तुसत्" इति। अयम्भावः—

एकमात्रं वस्तु ब्रह्मैव सच्छेषं सर्वं जगदज्ञानाधीनमारोपितं यथा शुक्तौ रजतं, रज्जुखण्डे सर्प इत्यादिः। शुक्ते रज्जुखण्डस्य च वास्तविकज्ञाने रजतं सर्पस्तत्प्रतीतिश्च निवर्तन्ते यथा, तथा तत्त्वज्ञानद्वारा अज्ञानावरणे छिन्ने ज्ञानावस्थातः प्राग् ब्रह्मणि प्रतीयमानं निखिलं जगत् स्वरूपप्रति-भासाभ्यां निवर्तते मिथ्यात्वात्।

नैयायिकवैशेषिकास्तु—"सतोऽसज्जायते" इति। अर्थात् परमाण्वादौ कारणवस्तुनि पूर्वतोऽविद्यमानं द्व्यणुकाद्यभिनवं कार्य्यमुत्पद्यते।

कापिलास्तु—"सतः सज्जायते" इति। अर्थात् सतः कारणात् कार्य्य-मुत्पद्यते कार्य्यमपि सदेवाभिव्यज्यते। अयमभिप्रायः—कारणेषु कारण-व्यापारात् प्रागनभिव्यक्तं विद्यमानं कार्य्यमेव कारणव्यापारानन्तरमुत्पद्यते, यथा प्रधानकारणकानि महदादितत्त्वानि सृष्टिजनकतद्व्यापारात् प्राक् तत्रैव प्रधानेऽनभिव्यक्तानि विद्यमानानि च सृष्टिजनकव्यापारानन्तरं तत उत्पद्यन्ते। यथा च दुग्धे कारणे दुग्धव्यापारात् प्रागनभिव्यक्तं विद्यमानं च दधि दुग्धव्यापारानन्तरमुत्पद्यते।

मतेऽस्मिन् कारणात् कार्य्योत्पत्तिः सैव कारणगताव्यक्तवस्तुनोऽभि-व्यक्तिर्नान्यत्किञ्चिदिति। मतेष्वेषु प्रथमेषु त्रिषु बौद्धवेदान्तिन्यायवैशेषि-केषु जगतः कारणं प्रधानं न सिद्ध्यति, प्र—प्रकर्षेण वैषम्यावस्थापरिहारेण धीयन्ते निधीयन्ते विद्यन्ते सत्त्वादिगुणा यस्मिन् तत्प्रधानं सत्त्वरजस्तमो-रूपमिति प्रधानशब्दार्थनिरूपणेन सुस्पष्टं प्रतिभासते।

साङ्ख्यमते तु जगद्रूपकार्य्यतः सत्त्वरजस्तमोरूपस्य त्रिगुणात्मकस्य प्रधानस्यावश्यमेवानुमितिः । वस्तुतो जगच्छब्दस्पर्शरूपरसगन्धात्मकं विद्यते, शब्दस्पर्शादयस्तु सर्वदा सुखदुःखमोहानुत्पादयन्ति, अतः सत्त्वरजस्तमोरूपा शब्दस्पर्शादयस्त्रिगुणात्मकाः, कार्य्यकारणयोरेतस्मिन्मते तादात्म्यं सुतरां राद्धान्तभूतम् । तथा च यादृशं कार्य्यं तादृशं कारणमनुमेयम्, एवञ्च त्रिगुणात्मकेन कार्य्येण त्रिगुणात्मकस्य प्रधानस्य सिद्धिर्नितरां निष्पद्येत ।

"असतः सज्जायते" इति बौद्धानां मतं मान्यं चेत्तर्हि असद् एवं धर्मशून्यकारणं सुखदुःखमोहोत्पादकानां शब्दस्पर्शादीनां कार्य्याणामनुरूपं सत्त्वरजस्तमोरूपात्मकं प्रधानं कथं स्यात् सदसतोस्तादात्म्याभावात् । यथा बौद्धमतेऽसता कारणेन सह सत्कार्य्यस्य न तादात्म्यम्, एवं वेदान्तिमतेऽपि सता कारणेन ब्रह्मणा सह भ्रममात्रशरीरस्य असतः कार्य्यस्य न तादात्म्यमिति तन्मतेऽपि न प्रधानसिद्धिः । कणभक्षाक्षपादमतेऽपि सतः कारणादसतः कार्य्यस्योत्पत्तिरिति सदसतोस्तादात्म्यानुपपत्त्या न प्रधानसिद्धिरिति भावः ।

सरलार्थः—प्रकृतेऽनुपलब्धिरभावान्न भवत्यपितु सूक्ष्मत्वाद्, यतो हि साङ्ख्यैऽजाया—आद्यायाः प्रकृतेर्वैरूप्यं सारूप्यञ्चाधिगताद् निखिलजगन्मण्डलानुस्यूताद् महदादितत्त्वकदम्बकात्तत्कार्य्यादुपलब्धिर्गीयते ॥१५॥

यतः सत्कार्य्यवादातिरिक्तवादे न प्रधानसिद्धिरित्यतः प्रथमं प्रधानसिद्ध्यर्थं सत्कार्य्यवादमङ्गीकरोति—

> न जायते तत्त्वमसत्कदापि
> सदा सदुत्पद्यत एव कार्य्यम् ।
> तस्मिन्नुपादानमवश्यमिष्टं
> यतो न भिन्नं निजकारणात्तत् ॥१६॥

सदा सदुत्पद्यत एव कार्य्यम्—कार्य्यं सर्वदैव सत् कारणव्यापारात् प्रागपीति बोध्यम् । तदेव चोत्पद्यते—जायते । कारणव्यापारोत्तरकाले

कार्य्यं सदिति तत्र तार्किकाणां न वैमत्यमिति कारणव्यापारात् प्रागपि कारणे कार्य्यं विद्यते इति साङ्ख्यैः साधनीयमस्त्यतस्तनयवदनुगामिभि– नैयायिकैः सिद्धसाधनं नोपस्थापनीयम् । यद्यपि बीजमृत्पिण्डादिविनाशा- नन्तरमङ्कुरघटाद्युत्पादो लभ्यते तथापि तत्र विनाशस्य न कारणतामपितु- बीजावयवा एव कुतश्चिन्निमित्तात् प्रादुर्भुतक्रियाः पूर्वव्यूहं ( अवयवानां सन्निवेशविशेषम् ) त्यजन्ति, व्यूहान्तरञ्च प्राप्नुवन्ति, तस्माच्च व्यूहान्त- रादङ्कुरोत्पाद इति बीजाद्यवयवस्यैव कारणत्वं नत्वभावस्य । अमुमेवार्थ- मुपोद्बलयति न्यायदर्शनम् "न विनष्टेभ्योऽनिष्पत्तेः" ( न्यायद० अ० ४ आ० १ सू० १७ ) अभावाद् भावोत्पत्तौ तु तस्य सर्वत्र सौलभ्यात् सर्वत्र सर्वकार्योत्पादापत्तिः । अनया रीत्या बौद्धमतस्य निरासो वेदितव्यः । शब्दादि- प्रपञ्चात्मकं जगन्मिथ्येति प्रतीतिर्दृढतरबाधकप्रमाणमन्तरा कथं सुरक्षितेति निर्णेतुं न शक्यते । अयमभिप्रायः—

यथा शुक्तौ रजतप्रतीते रज्जुखण्डे सर्पप्रतीतेश्चानन्तरं जायमानया नेदं रजतमित्याकारिकया प्रतीत्या नायं सर्प इत्याकारिकया प्रतीत्या च बाधस्तथा जगन्मिथ्येतिप्रतीतेः साधिका प्रबलप्रतीतिर्नास्ति काचनेतिभावः । तथात्र वेदान्तिमतमपि पराहतं ज्ञेयम् ।

नैयायिकमतनिरासाय "कार्य्यं सद्" इति प्रतिज्ञायाः साफल्यायेद- मुच्यते "न जायते तत्त्वमसत्कदापि" इति । यदि कारणव्यापारात् प्राक्- कार्य्यमसत् तदास्य कार्य्यस्य सत्त्वं केनापि कर्तुं न शक्यं नहि पीतं कुशलशिल्पिशतेनापि नीलं कर्तुं पार्य्यते ।

एक एव घटः कारणव्यापारात् प्राग् असन् कारणव्यापारानन्तरञ्च सन्निति कथनन्तु न प्रमोदास्पदं यतो हि कारणव्यापारात् प्राग् धर्मिणि कार्य्ये घटेऽविद्यमाने आधेयभूतोऽसत्त्वधर्मः कुत्र स्थास्यति ? आधेयस्याधाराधीनत्वं सर्वानुभवसिद्धमतः कारणव्यापारात् प्रागपि सदेव कार्य्यमिति । उत्पत्तेःप्राग्घटो-

ऽसन्निति व्यवहारोऽपि तार्किकनये नोपपद्यते—यथा रक्तं सरोजमित्यस्य रक्तगुणरूपधर्माश्रयः सरोजमित्यर्थस्तथा असन् घट इत्यस्यापि असत्त्वाश्रयो घट इत्यर्थोऽपेक्षितः स चानुपपन्नः सरोजेन सह रक्तस्येवासता घटेन सह असत्त्वरूपधर्मस्यासम्बद्धत्वात् । धर्मिसम्बद्धेन धर्म्यात्मना वा विद्यमानेन धर्मेणैव तदाश्रयत्वनियमान्नात्रासम्बद्धेनातदात्मना वा असत्त्वेन धर्मेण तदाश्रयत्वसम्भव इति तात्पर्य्यम् ।

ननु कारण व्यापारात् प्रागपि यदि कार्य्यं स्यात्तदा अपरं किमवशिष्टं यत्कुलालादिव्यापारेण साध्यं ? न च घटादिस्वरूपसम्पत्तये कारणव्यापार इति वाच्यम्, साङ्ख्यनये तस्य प्रागेव सम्पन्नत्वात्, तथा च यथा प्राक् सिद्धत्वान् मृत्पिण्डादेः कारणस्य स्वरूपसम्पत्तये न कश्चिद् व्यापारमारभते तथैव प्राक् सिद्धत्वात् कार्य्यस्वरूपस्य सम्पत्तये न कश्चिद् व्यापारमारभेत अतः कारकव्यापारस्य साफल्याय उत्पत्तेः प्राक् कार्य्यस्य असत्त्वमेव स्वीकर्तव्यमिति चेन्न कारणव्यापारात् प्रागपि सतो व्यवहारायोग्यसूक्ष्मरूपेण सिद्धस्य कार्य्यस्य व्यवहारयोग्यस्थूलरूपापादनरूपाभिव्यक्तेरवशेषात् कारण व्यापारस्य तदर्थमावश्यकतया उत्पत्तेः प्रागपि कार्य्यस्य सत्त्वे बाधकाभावात् ।

"कारणव्यापारादसदेव कार्य्यं कथन्नाभिव्यज्यते इत्यत उक्तम् "न जायते तत्त्वमसत् कदापि" । कदापि—कुत्रचिदपि असत्तत्त्वम्—असत्कार्य्यं न जायते—नोत्पद्यते कारणव्यापारात् प्राक् सत एव वस्तुनोऽभिव्यक्तिर्न त्वसतो वस्तुन इति भावः । सतोऽभिव्यक्तिरनुभवसिद्धा संप्रमाणा, यथा प्रागवस्थितस्य पीडनेन तिलेषु तैलास्याभिव्यक्तिः, प्रागवस्थितानामवघातेन धान्येषु तण्डुलानामभिव्यक्तिः, अनभिव्यक्तरूपेण प्रागवस्थितस्य दोहनेन गोषु पयसोऽभिव्यक्तिः । प्रागनवस्थितस्य असतो वस्तुनोऽभिव्यक्तौ च न किञ्चिदुदाहरणम् । वस्तुतोऽसद् वस्तु क्वचिदपि अभिव्यज्यमानमुत्पद्यमानं वा न दृष्टम् । उक्तञ्च साङ्ख्यसूत्रे—अ १ सू० १४४ "नासदुत्पादो

नृश्रृङ्गवत" इति । यदि नरश्रृङ्गमपि कारकव्यापारादूर्ध्वं व्यक्तमभविष्यत्तदाऽसत्कार्य्यमपि कारकव्यापारादूर्ध्वं व्यक्तमभविष्यत् तच्च नरश्रृङ्गभवनमनुपपन्नमित्यसत्कार्य्यभवनमप्यनुपपन्नमिति निष्कर्षः ।

उत्पत्तेः प्राक् कार्य्यस्य सत्त्वे हेत्वन्तरमुच्यते—"तस्मिन्नुपादानमवश्यमिष्टम्" इति । तस्मिन् कार्य्ये उपादानम्—उपादानकारणमवश्यमिष्टमपेक्षितम्—उपादानमन्तरा नोत्पद्यते उपादेयमिति कार्य्येणासम्बद्धमुपादानं न कार्य्यजनकमपितु कार्य्येण सम्बद्धं कार्य्यस्य जनकं, कार्य्यस्यासतश्च सम्बन्धो न सम्भवति तस्मात् कार्य्यं प्रागपि सत् ।

अत्रानुमानप्रकारश्चेत्थम्—उत्पत्तेःपूर्वं कार्य्यमुपादानसम्बद्धं तज्जन्यत्वात्. यच्च नोपादानसम्बद्धं तत्कार्य्यं कार्य्यासम्बद्धोपादनेन जन्यं न, यथा मृज्जन्यो न पट इति । इतश्च हेतोः सत्कार्य्यम्—"यतो न भिन्नं निजकारणात्तत्" इति । निजकारणात्-स्वकारणात् कार्य्यं यतो न भिन्नं तस्मात्तत्सत् । अर्थात् कार्य्यस्य कारणात्मकत्वात् कारणात् कार्य्यं भिन्नं न, कारणञ्च सत् तर्हि तदभिन्नं कार्य्यमसत् कथं स्यादितिभावः ।

कार्य्यकारणाभेदबोधकान्यनुमानानि—घटो मृत्पिण्डान्न भिन्नस्तदवस्थाविशेषात्मकत्वात्, यो यतो भिन्नस्स न तदवस्थाविशेषात्मको यथा गजोऽश्वस्य । पटस्तन्तुभ्यो नार्थान्तरं स्वोपादानोपादेयत्वात्, यो यतोऽर्थान्तरः स न तस्य उपादेयो यथा पटो घटस्य, तन्तुपटयोरुपादानोपादेयभावात् तयोर्नार्थान्तरत्वमिति, पटस्तन्तुभ्यो नार्थान्तरः संयोगानाश्रितत्वाद् विभागानाश्रितत्वाच्च, अर्थान्तरत्वे हि कुण्डबदरयोः संयोगो दृष्टः, हिमविन्ध्ययोर्विभागश्च दृष्टः । एवमेव पटस्तन्तुभ्यो न भिन्नो गुरुत्वान्तरकार्य्याग्रहणात्, यो यतो भिन्नः स तद्गुरुत्वान्तरकार्य्यं प्राप्नोति यथा एकपलसुवर्णनिर्मितस्वस्तिकाख्यालङ्कारगुरुत्वापेक्षया पलद्वयसुवर्णनिर्मितस्वस्तिकाख्यालङ्कारस्य गुरुत्वमधिकं भवति न तथा तन्तुगुरुत्वापेक्षया पटगुरुत्वमधिकमिति न पटस्तन्तुभ्यो भिन्न इति ।

नन्वेवं तन्तुपटयोरैक्ये कथमिमे तन्तवः पटश्चायमिति नामभेद इति चेच्छ्रूयताम्—तेन तेनातानवितानरूपसंस्थानभेदेनावस्थान्तरं प्राप्तास्तन्तव एव पटो न ततोऽर्थान्तरम्, अवयवविन्यासविशेषसंस्थानभेदेन नामभेद इत्यभिप्रायः। एतेन तन्तव इमे पटश्चायमितिज्ञानवैलक्षण्यात्तन्तुपटयोर्भेदः, कुण्डबदरयोरिव तन्तुषु पट इत्याधाराधेयरूपव्यवहारभेदाद् भेदः, तन्तुभिः पटः सीव्यते, पटेन च देह आव्रियत इति क्रियाभेदाद् भेदः, कार्यकारणयोरभेदे हि मृत्पिण्डेनाप्युदकमाह्रियेत, घटेनापि च भित्तिः क्रियेत, तथा तन्तुभिरपि प्राव्रियेत, पटेनापि च पट उत्पाद्येत, किन्त्वेवं न भवतीत्यर्थक्रियाव्यवस्थाभेदात् कार्यकारणयोर्भेद इत्यादिनिखिलं नैयायिकोक्तं पराहतं ज्ञेयम्, अभिन्नेऽपि वस्तुनि तत्तद्विशेषाविर्भावतिरोभावरूपोपाधिभेदेनौपाधिकं भेदमादायैतेषां समेषां हेतूनां साफल्येन विरोधासत्त्वान्न पारमार्थिकाभेदविघटने पूर्वोक्तानां हेतूनां सामर्थ्यमिति भावः।

सरलार्थः—असद्वस्तुनः करणं क्वापि न दृष्टमतोऽसत्तत्त्वं कदापि नोत्पद्यते सतः कारणात् सदेव कार्य्यं सततमुत्पद्यते। स्वोपादाने सम्बद्धमेव कार्य्यं जन्यते नत्वसम्बद्धमुपादानस्य कारणस्य च कार्य्योत्पत्तये नितरामावश्यकत्वं तद् विना कार्य्यानुत्पत्तेः। एवं साङ्ख्यनये पूर्वोक्तरीत्या कार्य्यकारणयोः ( उपादानोपादेययोः ) ऐक्यं विद्यते, कारणं च सत्तर्हि तदात्मकं कार्य्यं कथमसद् भवेत्? कथमपि नेत्यभिप्रायः ॥ १६ ॥

कारणैरसम्बद्धमेव कार्य्यं कथं न जन्यते ? तथ्यचासदेवोत्पद्यतामित्याकारिकाया अकाङ्क्षायाः शान्तये प्रोच्यते—

यत्कारणं यस्य भवे समर्थं
तस्मात्तदेवोद्भवतीह कार्य्यम्।
न सर्वकार्य्यं समकारणाद् वै
सत्कार्य्यवादस्तु ततः सुसिद्धः ॥ १७ ॥

वै—निश्चयेन, सर्वकार्य्यं—निखिलं जन्यं वस्तु, समकारणात्—सर्व-कारणान्न जायते, असम्बद्धस्य कार्य्यस्य जन्यत्वे असम्बद्धत्वाविशेषेण सर्वं जन्यं वस्तु सर्वस्मात् कारणाज् जायेत परन्तु नैवं तस्मादसम्बद्धमसम्बद्धेन न जायतेऽपितु सम्बद्धं सम्बद्धेन जायत इति। तथा च वृद्धानां वचनम्—

"असत्त्वे नास्ति सम्बन्धः कारणैः सत्त्वसङ्गिभिः।
असम्बद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः" इति॥

असत्त्वे—कारणव्यापारात् प्राक् कार्य्यस्याविद्यमानत्वे सति सत्त्व-सङ्गिभिः—सत्त्वधर्माश्रयैः कारणैः सह कार्य्यस्य सम्बन्धो न स्यात्, सद-सतोस्सम्बन्धानुपपत्तेः, कारणैरसम्बद्धस्य च कार्य्यस्योत्पादमिच्छतो मते न व्यवस्थितिः—मृद एव घटः कनकादेव कटकमित्येवंविधो नियमो भज्ये-तेतिभावः।

कार्य्येणासम्बद्धमपि सत्कारणं तदेव कार्यमुत्पादयति, यस्मिन् कार्य्ये यत्कारणं शक्तं शक्तियुक्तं, न सर्वं कारणं, शक्तिश्च कारणस्य कार्य्य-दर्शनादनुभूयते तस्मान्नाव्यवस्थेतिशङ्कानिरासायोक्तं "यत्कारणं यस्य भवे समर्थं, तस्मात्तदेवोद्भवतीह कार्य्यम्" इति। इह—साङ्ख्यनये यस्य कार्य्यस्य भवे—उत्पादे यत्कारणं समर्थं—शक्तिमत्, तस्मादेव तदेव कार्य्यमुद्भवति—उत्पद्यते नान्यत्। कार्य्यजननशक्तिमति कारणे विद्यमाना या शक्तिः, सा किं सर्वत्र सर्वकार्य्यविषया सर्व-कार्य्यनिरूपिता वा, अथवा शक्ये यदुत्पादयितुं शक्यं कार्य्यं तद्विषया तन्निरूपिता वा, यदि, तर्हि सर्वं सर्वस्मात्सम्भवमित्युक्ताव्यवस्था पुनस्तदवस्थैव, शक्य एव सा शक्तिरिति चेत्तर्ह्यवर्तमाने शक्ये तत्र तद्-विषया तन्निरूपिता वा शक्तिरिति कथनं कथं सङ्गतं स्यात्? न कथमप्य-सतो विषयत्वाभावान्निरूपकत्वासम्भवाच्च। विद्यमानयोरेव विषय-विषयिभावसम्बन्धो निरूप्यनिरूपकभावसम्बन्धो वा, न विद्यमानाविद्-

मानयोरिति भावः । कारणे कारणात्मना विद्यमाना कार्य्यस्याव्याकृतावस्थाख्यानागतावस्थैव कार्य्यनियामिका शक्तिस्तया सम्बद्धं कार्य्यं च शक्यमित्यनागतावस्थावत्त्वेन कारणे कार्य्यस्य सत्त्वान्न कार्य्यस्योत्पत्तेः प्रागसत्त्वमिति तात्पर्य्यम् । कार्य्यशक्तिमत्त्वमेवोपादानकारणत्वम्, अन्यस्य दुर्वचत्वाल्लाघवाच्च सा शक्तिः कार्य्यस्यानागतावस्थैवेति विज्ञानभिक्षवः ।

अत्र शङ्कराचार्य्याः—शक्तिश्च कारणस्य कार्य्यनियमार्था कल्प्यमाना नान्याऽसती वा कार्य्यं नियच्छेत्, असत्त्वाविशेषादन्यत्वाविशेषाच्च, तस्मात् कारणस्यात्मभूता शक्तिः शक्तेश्चात्मभूतं कार्य्यमिति ।

कार्य्यकारणाभ्यामन्या कार्यवदसती वा शक्तिः कार्य्यं न नियच्छेत्कार्यनियामिका न सम्भवेत्, अन्यत्वासत्त्वयोः शक्तावन्यत्र चाविशेषात् । यस्य कस्यचिदन्यस्य नरशृङ्गादेर्वा नियामकत्वप्रसङ्गादतः कारणस्यात्मभूता कारणादभिन्ना शक्तिरुपेया, शक्तेश्चात्मभूतं कार्य्यमङ्गीकरणीयं कारणेऽव्यक्ततयावस्थितं कार्य्यं कार्य्यस्यानागतावस्थैव वाऽभिव्यक्तिनियामकतया शक्तिर्न ततोऽन्या काचिच्छक्तिरिति भावः । तथा च यथा कूर्मस्याङ्गानि कूर्मदेहे प्रविशन्ति तिरोभवन्ति निस्सरन्ति चाविर्भवन्ति न तु कूर्मात्तदङ्गान्युत्पद्यन्ते प्रध्वंसन्ते वा । एवं मृदादिभ्यो निस्सरन्त आविर्भावं प्राप्ता घटादय उत्पद्यन्त इत्युच्यन्ते मृदादिषु निविशमानाश्च तिरोभवन्तोऽतीतावस्थां प्राप्ता घटादयो विनश्यन्तीत्युच्यन्ते । असतां प्रागभावप्रतियोगिनां घटादीनां कारणव्यापारादुत्पत्तिर्न, सतामेव च तेषां विनाशो नेति भावः ।—

यथा भगवता कृष्णद्वैपायनेनोक्तम्—

"नासतो विद्यते भावो नाभावो विद्यते सतः" इति ।

ननु घटादेरुत्पादप्रध्वंसौ मा भूतां तथापि कथं मृद्घटयोरभेद इति चेच्छ्रूयताम्—स्वावयवेभ्यः संकोचविकाशिभ्यो यथा कूर्मो न भिन्नस्तथा संकोचविकाशिभ्यो मृत्सुवर्णादिभ्यो घटमुकुटादयोऽपि न भिन्ना इति ।

ननु भवतु नाम पटस्याविर्भाव एव नोत्पत्तिस्तथापि कारणव्यापारात् प्राक् पटाविर्भावः सन् असन् वा असँश्चेत्तर्हि प्राप्तमसदुत्पत्तिः सँश्चेत्तर्हि किं कारणव्यापारेण? न हि कार्य्ये सति कारणव्यापारप्रयोजनं किञ्चित्। आविर्भावोऽपि प्रागनभिव्यक्त इत्यनभिव्यक्ताविर्भावस्याविर्भावाय कारणव्यापार इति चेत्तर्ह्यभिव्यक्ताविर्भावस्याविर्भावोऽपि प्रागनभिव्यक्त एवाविर्भावत्वाविशेषाद्, यदनभिव्यक्तं तदेवाविर्भवतीतिसिद्धान्ताच्चेति तस्याप्यन्याविर्भावो वक्तव्य एवं तस्यापीत्यप्रामाणिक्याविर्भावधारा प्रसज्येतेति न कुत्रापि विश्रान्तिरिति नैयायिकैरुच्यते तदास्माभिः साङ्ख्यैरपि तन्मतमालोच्यते—तैरुच्यतेऽसदुत्पद्यते केयमसदुत्पत्तिः सती, असती वा सती चेत् कारणव्यापारो व्यर्थोऽसती चेत्तस्या अप्युत्पत्त्यन्तरमित्यनवस्था तन्मतेऽपि सुस्था।

यदीयमुत्पत्तिर्नार्थान्तरं पटात्तर्हि पटोत्पत्त्योरेकार्थकत्वेन पर्य्यायत्वापत्तिः, पट इत्यनेन योऽर्थोऽभिधीयते स एवार्थ उत्पद्यते इत्यनेनाप्यभिधीयेत ततश्च पट इत्युक्त उत्पद्यत इति न वक्तव्यं, पर्यायियोः सहप्रयोगाभावेन पौनरुक्त्यापत्तेः। एवं पटो विनश्यतीत्येतदपि न वाच्यं पट इत्यनेन हि उत्पद्यत इत्यभिधीयते विनश्यतीत्यनेन च ध्वंसत इत्यभिधीयते, तथा च वर्तमानकालिकोत्पत्त्याश्रयो यो वर्तमानकालिकध्वंसाश्रय इत्यर्थोऽत्रापद्येत स चात्यन्तविरुद्धः। तादृशविरोधपरिहाराय स्वकारणेषु तन्तुषु यस्समवायः स पटोत्पत्तिरथवा स्वस्मिन् पटे कार्य्ये यः सत्ताजातिसमवायः (यस्याः सम्बन्धे सति पटः सन्नित्यादिव्यवहारः सा सत्ताजातिरिति व्यवहारः) स पटोत्पत्तिरिति नैयायिकैर्वाच्यं तथा चोभयथापि समवायसम्बन्धस्य नित्यत्वेन समवायरूपाया उत्पत्तेरपि नित्यत्वादुत्पत्तेरुत्पत्तेऽनुपपन्नत्वम्। असतः पटस्य कथं कारणे समवायः कथं वाऽसति पटे सत्तासमवायः सदसतोः सम्बन्धासम्भवात्।

नन्वस्तूत्पत्तेरुत्पत्त्यभावस्तथापि भवतान्यच्छिद्रालोडनेन किमुपलब्धमितिचेच्छ्रूयताम् उत्पत्तेरुत्पत्त्यसम्भवेनोत्पत्तेः प्राक् सिद्धत्वे सत्यपि यथा

भवन्मत उत्पत्तिप्रयोजनानि कारणानि व्याप्रियमाणानि क्रियन्ते कार्य्यार्थिभिरेवं मन्मतेऽपि प्राक्सिद्धस्यैव पटादेराविर्भावाय कारणापेक्षेत्युपपन्नमिति ममोपलब्धम्। यथा न्यायनये समवायस्वरूपत्वेन प्राक्सिद्धाया एवोत्पत्तेरभिव्यक्तये कारणव्यापारस्तथा साङ्ख्यनये प्राक्सिद्धस्यैव कार्य्यस्याभिव्यक्तये कारणव्यापार इति न कारणव्यापारानर्थक्यशङ्कासर्पिणीग्रासलेशस्यावसर इति भावः।

ननु प्रतिबन्दिग्रहेण गृहीतस्तार्किको यथाकथञ्चिन्मौनं भजतु नाम तथाप्याविर्भावस्य प्राक् सत्त्वे कारणव्यापारैः किं प्रयोजनम्? असत्त्वे चासत्कार्यवादापत्तिरिति पूर्वोक्तापत्ते भवन्नये कः प्रतिकार इति चेदत्रोच्यते— "तदेतत्त्रैलोक्यं व्यक्तेरपैति, कस्मान्नित्यत्वप्रतिषेधात्, अपेतमप्यस्ति विनाशप्रतिषेधात् संसर्गाच्चास्य सौक्ष्म्यम्" इति योगभाष्यात् सर्वकार्य्याणामवस्थातोऽनित्यत्वेन स्वरूपेण च नित्यत्वेन सदसत्त्वाभ्युपगमेनावस्थानोपजनापायधर्मवत्त्वाङ्गीकाराद् व्यक्तावस्थाऽऽविर्भावरूपाऽभिव्यक्तिरप्यसत्येवोत्पद्यत इत्यभ्युपगमे न काचनापत्तिरिति। नचैवं सत्कार्यवादहानिः सूक्ष्मावस्थाया एवास्मन्मतेऽसत्तारूपत्वाभ्युपगमात्, नचैवं सत्यभिव्यक्तेरप्यभिव्यक्त्यङ्गीकारेणानवस्थापत्तिरिति वाच्यम् अस्या अनवस्थायाः कपिलेनादोषत्ववचनात्। तथा च साङ्ख्यसूत्रम्—"पारम्पर्यतोऽन्वेषणा बीजाङ्कुरवत्" इति (अ० १ सू० १२२) पारम्पर्य्यतः परम्परारूपेणाभिव्यक्तेरनुधावनं कर्त्तव्यं बीजाङ्कुरवत्प्रामाणिकत्वेनास्या अदोषत्वादित्यर्थः।

सरलार्थः—यस्य कार्य्यस्योत्पादे यत्कारणं शक्तिमत्तस्मादेव कारणात् तदेव कार्य्यमुत्पद्यते, न सर्वस्मात् कारणात् सर्वं कार्य्यं जायतेऽनियमप्रसक्तेः सिकतादिनापि तैलाद्युत्पत्तिप्रसङ्गाच्च। अतः सतः सज्जायत इति सत्कार्यवादः साङ्ख्यनये सुसम्पन्नः॥ १७॥

अनया रीत्या प्रधानसिद्धौ सप्रमाणमपेक्षितसत्कार्य्यवादं प्रतिपाद्य वक्ष्यमाणं प्रधानस्वरूपमभीप्सितमादर्शयितुं विवेकज्ञानोपयोगिव्यक्तानां परस्परं साधर्म्यमिदानीमुच्यते—

सकारणं व्यक्तमनित्यरूपं
बहुप्रकारं वलितं क्रियाभिः ।
अव्यापकं ज्ञापकमाश्रितञ्च
संयोग्यधीनं ननु कार्य्यजातम् ॥ १८ ॥

व्यक्तं सकारणम्—कारणेन सहेति सकारणं कार्य्यमिति यावत् । अनित्यरूपं—अनित्यम्—विनाशि लीङ्श्लेषणे धातोर्निष्पन्नो लयः संश्लेषो न तूच्छेद इत्येतदर्थकाद् "नाशः कारणलयः" ( अ १ सू० १२१ ) इति सूत्रात् कारणे सूक्ष्मतयाऽवस्थानं नाशस्तद्वत् कदाचित्तिरोभावशीलं तिरोभावीति-यावत् । बहुप्रकारम् पुरुषं पुरुषं प्रति महदादीनां भिन्नत्वादनेकं सजातीय-भेदवदित्यर्थ । सजातीयभेदवत्त्वञ्चात्र—स्वाश्रयप्रतियोगिकान्योऽन्याभाव-समानाधिकरणतत्त्वविभाजकोपाधिमत्त्वम् । स्वं महत्त्वादिस्तदाश्रयो महदादिः स प्रतियोगी यस्य तादृशो योऽन्योऽन्याभावस्तत्समानाधिकरणो यस्तत्त्वविभाजकोपाधिस्तादृशोपाधिमत्त्वम् । संभवति चेदं महदादितत्त्वेषु महदादिप्रतियोगिकान्योन्याभावेन सह महदन्तरादौ महत्त्वादेः सामानाधि-करण्यसत्त्वात् । प्रकृतौ तु न संभवति प्रकृत्यन्योन्याभावस्य प्रकृतावसत्त्वात् । पुरुषे च संभवति तत्र पुरुषान्तरे पुरुषान्तरप्रतियोगिकभेदसमानाधिकरणस्य पुरुषत्वात्मकपदार्थविभाजकधर्मस्य विद्यमानत्वात् ।

एतेन "अनेकत्वं सर्गभेदेन भिन्नत्वं-सर्गद्वयासाधारण्यमितियावत्, न पुनः सजातीयानेकव्यक्तिकत्वं प्रकृतावतिव्याप्तेः प्रकृतेरपि सत्त्वाद्यनेक-रूपत्वात्" इति विज्ञानभिक्षूक्तं पराहतमेव, प्रकृतेरनेकरूपत्वेऽप्यनेक-व्यक्तिकत्वाभावेन प्रकृतिप्रतियोगिकान्योन्याभावस्य प्रकृतावभावात् । किञ्च "अजामेकाम्" इति श्रवणादप्रामाणिकं प्रकृतेरनेकव्यक्तिकत्वाभिधान-मित्यनवसरेऽस्थान एव विज्ञानभिक्षोर्मोह इति ।

क्रियाभिर्वलितं—परिस्पन्दवत् परिस्पन्दः प्रवेशनिःसरणादिरूपा क्रिया तद्वत् । महदादयो गृहीतं गृहीतं शरीरं त्यजन्ति शरीरान्तरं च गृह्णन्तीति तेषां महदादीनां परिस्पन्दः सुस्फुटः । शरीरधरादीनां च परिस्पन्दः प्रख्यात एव ।

विज्ञविज्ञानभिक्षवस्तु—क्रियाभिर्वलितत्वं—सक्रियत्वम् अध्यवसायादिनियतकार्यकारित्वं प्रकृतेस्तु सर्वक्रियासाधारण्येन कारणत्वान्न कार्य्यैकदेशमात्रकारित्वं न च क्रिया कर्मैव कथ्यते प्रकृतिक्षोभात्सर्गश्रवणेन प्रकृतेरपि कर्मवत्तया सक्रियत्वापत्तेरित्याहुस्तन्न समीचीनं क्षोभादिपरिणामलक्षणक्रियायाः प्रकृतौ सत्त्वेऽपि गत्यगतिलक्षणपरिस्पन्दात्मकक्रियाया अभावात् सक्रियत्वापत्तेरभावात् ।

अव्यापकं सर्वं परिणामिनं न व्याप्नोति, कारणेन कार्य्यं व्याप्तं न कार्येण कारणं, वेविषन्ति व्याप्नुवन्ति स्वस्वकार्य्यं, व्याप्नुवदपि च महदादिकं न प्रकृतिं व्याप्नोतीत्यव्यापकम् असर्वगतमित्यर्थः ।

ज्ञापकं लिङ्गयति गमयति ज्ञापयतीति लिङ्गं ज्ञापकं प्रकृतेः । महदादयः प्रकृतेर्ज्ञापका न तु पुरुषस्य साधका इति भावः ।

संयोगि—संयोगोऽस्येति संयोगि संयोगस्यानुयोगि संयोगस्य प्रतियोगिन्नेति भावः । अप्राप्तिपूर्विका प्राप्तिः संयोगः, धरादीनां परस्परं संयोगोऽन्येषामपि संयोगो न तु प्रकृतेः बुद्ध्यादिभिः संयोगस्तादात्म्यान्नापि—सत्त्वरजस्तमसां परस्परं संयोगोऽप्राप्तेरसत्त्वादिति तत्त्वम् ।

आश्रितम्—स्वकारणमाश्रितं महदादि, महत्तत्वं स्वकारणं प्रधानमाश्रितम्, अहङ्कारतत्त्वञ्च स्वकारणंमहत्तत्त्वमाश्रितमित्येवं सर्वं व्यक्तमाश्रितम्, व्यक्तानां कार्यकारणभूतानां परस्परमाश्रयाश्रयिभाव इतिभावः । यद्यपि महदादीनां कार्य्याणां स्वकारणैः सह वास्तविकः कश्चन भेदो नास्ति कार्य्यकारणयोस्तादात्म्यात्तथापि व्यवहारे कथञ्चिद् भेदविवक्षयाश्रयाश्रयिभावो बोध्यः । इह अरण्ये तिलका इतिवत् ।

ननु निश्चयेनाधीनं—परतन्त्रं महदादिकार्य्यजातम्, महत्तत्त्वेन स्वकार्य्येऽहङ्कार उत्पादयितव्ये प्रकृत्यनुप्रवेशरूपं प्रकृतिसाहाय्यमपेक्ष्यते प्रकृतिसाहाय्यासत्त्वेऽसमर्थं सदहङ्कारमुत्पादयितुं महत्तत्त्वं न प्रभवेत्, एवमहङ्कारादिभिरपि स्वकार्य्येषूत्पादयितव्येषु प्रकृत्यनुप्रवेशरूपं साहाय्य-मपेक्ष्यते प्रकृतिसाहाय्यासत्त्वे तु सामर्थ्यविरहितं सदहङ्कारादितत्त्वं स्वकार्य्य-मुत्पादयितुं न प्रभवेत्। यतः सर्वं व्यक्तं महदादितत्त्वं जननीयेषु स्वकार्येषु प्रकृत्यापूरमपेक्षते (प्रकृत्यनुप्रवेशरूपं प्रकृतिसाहाय्यमपेक्षते) तस्मात्कारणमपि व्यक्तं परां प्रकृतिमपेक्षमाणं स्वकार्योत्पादने परतन्त्र-मिति भावः।

सरलार्थः—सर्वं महदादितत्त्वं कार्य्यम्, अनित्यं—तिरोभावि, सक्रियम्, अनेकम्, अव्यापकम्, प्रधानस्य ज्ञापकं (लिङ्गम्) स्वकारण-माश्रितं, संयोगस्य प्रतियोगि, अनुयोगि परतन्त्रञ्चेति बोध्यम् ॥ १८ ॥

व्यक्तसाधर्म्यमभिधाय व्यक्तवैधर्म्यमव्यक्ते निरूपयितुमुच्यते—

नित्यं सदाऽस्पन्दनशीलमेकं
ज्ञाप्यं ततः सर्वगतं स्वतन्त्रम्।
तथाऽस्त्यसंयोगि न हेतुयुक्तं
व्यक्ताद्विभिन्नं भवति प्रधानम् ॥१९॥

अहेतुमदजमव्यक्तं न कुतश्चिदाविर्भवत्यपितु नित्यं निरन्तरसत्त्वेना-तिरोभावि, सदा सर्वदा अस्पन्दनशीलं परिस्पन्दहीनं-निष्क्रियम्, एकं-सजातीयभेदविधुरम्, ज्ञाप्यं स्वकार्यैर्ज्ञेयमनुमेयम् अर्थादलिङ्गं, सर्वगतं—परिणामजातव्यापकं, स्वतन्त्रम्—अनपेक्षं सत् स्वकार्य्योत्पादने समर्थं, तथा असंयोगि—अनवयवम्—संयोगस्य प्रतियोग्यनुयोगि वा न, न हेतुयुक्तम्—

अकार्य्यमर्थात् प्रधानस्य न कोऽपि जनक इति भावः। एवं रीत्या प्रधान-मव्यक्तं व्यक्ताद् विभिन्नं भवति।

सरलार्थः—अव्यक्तं नित्यं निष्क्रियमेकमलिङ्गं व्यापकं स्वतन्त्र-महेतुमदसंयोगि च यतस्तस्माद् व्यक्ताद् विभिन्नं बोध्यम् ॥१९॥

व्यक्ताव्यक्तयोर्वैधर्म्यमभिधाय सम्प्रति तयोस्साधर्म्यं पुरुषाच्च तयो-र्वैधर्म्यमुच्यते—

सम्भूयकारि त्रिगुणात्मकञ्च
साधारणं सर्वकृतेऽपि भोग्यम्।
चैतन्यशून्यं परिणामशीलं
समं द्वयं किन्तु पुमान् प्रतीपः ॥२०॥

सम्भूयकारि परस्परं सम्मिश्रणपुरःसरं कार्य्यकारणशीलं यत एकं किञ्चित्तत्त्वमात्मीयकार्य्योत्पादने न पर्य्याप्तमपि तु सम्भूय मिलित्वाऽतो महदादेस्संहत्यकारित्वम्. एवंरीत्या केनचित् प्रकारेणैकस्मात् कस्यचिन्न सम्भव इति।

त्रिगुणात्मकं—त्रयो गुणाः सुखदुःखमोहा अस्येति त्रिगुणं तदात्मकं व्यक्तमव्यक्तञ्च यद्यपि साङ्ख्यनये सुखधर्मकं सत्त्वं, दुःखधर्मकं रजः, मोहधर्मकं तम इति सत्त्वादितत्त्वत्रयमेव चैतन्योपकरणत्वात् पुरुषपशुबन्धक-महदादिरज्जुनिर्मातृत्वाच्च गुणपदाभिधेयं न सुखादिकं धर्मजातं तथापि धर्मधर्मिणोरभेदमाश्रित्य सुखादयो धर्मा एवात्र गुणपदेन विवक्षिता न सत्त्वादयो धर्मिण इति ध्येयम्।

## अत्रेदमवधेयम्—

यद्यत्र गुणपदेन सत्त्वरजस्तमांसि तत्त्वानि चिकीर्षितानि तर्हि त्रिगुण-मित्यस्य सत्त्वादिगुणत्रयाश्रयभूतं व्यक्तमव्यक्तञ्चेत्यर्थः स चानिष्टो

व्यक्तस्य महदादेर्गुणत्रयाश्रयत्वेऽप्यव्यक्तस्य गुणत्रयाश्रयत्वाभावात् तत्राव्याप्तिप्रसङ्गात्। सत्त्वादिगुणानां प्रकृतिधर्मत्वं नास्ति तेषां गुणानां प्रकृतिस्वरूपत्वादित्यर्थकेन "सत्त्वादीनामतद्धर्मत्वं तद्रूपत्वात्" इति कापिलसूत्रेण "एतेगुणाः प्रधानशब्दवाच्या भवन्ति" इति योगभाष्येण चाव्यक्तस्य गुणत्रयात्मकत्वाभिधानेन प्रधाने गुणत्रयनिरूपिताश्रयताया असम्भवाद् गुणशब्देन सुखादीनां ग्रहणे तु प्रधानस्यापि सत्त्वादिधर्मभूत-सुखाद्याधारत्वसम्भवान्नाव्याप्तिरिति, एवं गुणपदेन सुखादीनां ग्रहणे सत्त्वादीनामग्रहणे च "तस्मिंस्तस्मिंस्तु तन्मात्रास्तेन तन्मात्रता स्मृता, न शान्ता नापि घोरास्ते न मूढाश्चाविशेषिणः" इति विष्णुपुराणवाक्येन सूक्ष्मभूताख्यशब्दतन्मात्रादीनां पञ्चतत्त्वानां शान्तादिपदाभिधेयसुखादि-धर्मशून्यत्वोक्त्या तेषां कथं सुखादिमत्त्वेन त्रिगुणत्वमितिचेदत्र ब्रूमः—पञ्च-तन्मात्राणामपि सुखादिमदहङ्कारपरिणामत्वेन सुखाद्याश्रयभूतपञ्चमहाभूत-कारणत्वेन च सुखाद्याश्रयत्वस्यावश्यंभावेन त्रिगुणत्वं निष्प्रत्यूहमिति, नच विष्णुपुराणवचनविरोधस्तस्यास्मदाद्युपभोगयोग्यस्पष्टसुखादिधर्मक-शब्दाद्याश्रयभूतानि यानि स्थूलभूतानि तेभ्यो विलक्षणान्यस्मदुपभोगा-योग्यास्पष्टसुखादिमच्छब्दाद्याश्रयभूतानि सूक्ष्मभूतानि पञ्चतन्मात्राणीत्यर्थे तात्पर्यात्। सुखादिधर्मकसत्त्वादित्रयात्मकत्वेन प्रधानस्य त्रिगुणत्वं, तत्कार्य्यत्वेन च महदादीनां त्रिगुणत्वमिति भेदः।

यथा वृक्षसमूहरूपस्य वनस्य वृक्षात्मकत्वेऽपि वनं वृक्षा इति वनस्था-श्रयत्वव्यवहारस्तथा सत्त्वादिसमूहरूपस्य प्रधानस्य सत्त्वादिस्वरूपत्वेऽपि प्रधाने सत्त्वादयस्तिष्ठन्ति विद्यन्त इति प्रधानस्याश्रयत्वव्यवहार इति सत्त्वादिप्रधानयोराश्रयाश्रयिभावस्तदा त्रयः सत्त्वादयो गुणा यस्मिंस्तत् त्रिगुणमिति व्याख्यानमपि न हेयमिति।

ननु "इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम्" इति न्यायदर्शनो-क्तदिशा सुखादीनामात्मधर्मत्वमिति चेन्न "असङ्गो ह्ययं पुरुषः" "साक्षी

चेता केवलो निर्गुणश्च" इति श्रुतिविरोधात् सुखादीनामात्मगुणत्वाभावात्।

विज्ञानमेव सुखदुःखमोहोत्पादकशब्दस्पर्शाद्याकारेण परिणमते, सुखादिस्वभावाः शब्दादयो विज्ञानात् पृथक् पदार्था न सन्तीति विज्ञानवादिनो बौद्धास्तन्मतं निरसितुमुक्तम्—"भोग्यम्" इति, भोग्यं विषयो ग्राह्य इति यावत्। अर्थाद् विज्ञानात् पृथक् स्वतन्त्ररूपेण ग्रहणार्हः पदार्थ इति अतएवोक्तम्—"सर्वकृतेऽपि साधारणम्" अयमभिप्रायः—

शब्दादयो युगपदेवानेकपुरुषैर्गृह्यन्ते, यदि ते शब्दादयो विज्ञानरूपा एव, तदा यथा विज्ञानं मानसिकव्यापारात्मकत्वात् प्रतिपुरुषं भिन्नं भिन्नं भवति तथैव शब्दादयोऽपि प्रतिव्यक्ति भिन्ना भिन्ना आवश्यकाः स्युरर्थाद् यथा परपुरुषबुद्धेरप्रत्यक्षत्वेन हेतुना एकस्य पुरुषस्य कस्यचन विज्ञानं तदन्यपुरुषस्य कृतेऽज्ञातमप्रत्यक्षञ्च संलक्ष्यते, तथैव विज्ञानात्मकत्वाच्छब्दादयोऽपि पदार्था यस्य पुरुषस्य विज्ञानभूतास्तस्यैव प्रत्यक्षविषया नान्यस्य प्रत्यक्षविषयाः किन्तु नैवं सर्वस्यैव प्रत्यक्षविषयतां गतास्ते दृश्यन्तेऽतो विज्ञानाद् भिन्नाः सन्ति। किञ्च तेषां विज्ञानभिन्नत्वस्वीकारेणैव नर्तक्याः कटाक्षमेकं यच्छब्दादिवत् स्वतन्त्रः पदार्थोऽस्ति तद् युगपदेव नानापुरुषैः प्रतिसन्धीयते, तच्च प्रतिसन्धानं सङ्गतं भवत्यन्यथा विज्ञानात्मकत्वाङ्गीकारे तु वैयक्तिकविज्ञानरूपत्वाद् युगपत् सर्वजनप्रतीतिविषयतानुपपन्नैव स्यादितिभावः।

योगाचारसम्प्रदायस्य बौद्धस्य पूर्वोक्तं मतं दार्शनिकनिकाये विज्ञानवादनाम्ना प्रथितं चकास्ति। मतस्यास्य पोषकत्वेनैव ते विज्ञानवादिनो बौद्धा इति। तेषां मतस्य सूक्ष्मपरिशीलनमेवं बोध्यम्—

यथा स्वप्नावस्थायां बाह्यवस्त्वभावेऽपि स्वप्नद्रष्टुः पुरुषस्य विज्ञानमेव घटपटाद्यनेकविषयाकारेण परिणममानं स्वयमेव तस्य ग्राहकं ज्ञातृ च परिलक्ष्यते, आहोस्विद् यथा जागरणावस्थायामपि बाह्यवस्त्वभावे दिवाकरमरीचिषु जलप्रतीतिः शुक्तौ रजतप्रतीतिः, रज्जुखण्डे सर्पप्रतीतिश्च

जायते तथैव जागरणावस्थायां प्रतीयमानाः पदार्थाः घटपटादयोऽपि विज्ञानस्यैवावस्थाविशेषाः, विज्ञानाद् बहिस्तेषां बाह्यपदार्थानां काचन वास्तविकी सत्ता नास्तीति तेषामाशयः। ननु यदि सर्वे पदार्था विज्ञानात्मका एव तदा विज्ञानेभ्यो नीलपीतादिरूपेण पदार्थानां वैचित्र्यस्यावभासः कुत इति चेन्न विज्ञानगतस्यैवैतस्य वैचित्र्यस्य प्रतीतये व्यक्तिगतवासना-वैचित्र्यस्यैव हेतुत्वेनाभ्युपगततया पदार्थवैचित्र्यावभासे बाधकाभावात्। तथा च यथा स्वप्नकालीनप्रतीयमानाः पदार्था न विज्ञानवैचित्र्यादपि तु व्यक्तिगतवासनावैचित्र्यादेव विभिन्नाकारेण प्रतीयन्ते तथा जागरणकालीन-पदार्थवैचित्र्यमपि न विज्ञानवैचित्र्यादपितु व्यक्तिगतवासनावैचित्र्यादेव। वासनावैचित्र्यस्यानाद्यविद्या कारणमस्ति।

तेषां नये विज्ञानबाह्यपदार्थयोरभेदे कारणमिदमपरमप्यवधेयम्, यस्य वस्तुनो येन सह नियमेनोपलब्धिस्तत् तस्माद्भिन्नं न भवति यथा चन्द्रेण सह प्रतीमानस्य द्वितीयचन्द्रस्य न पार्थक्यमिति। उक्तञ्च सर्वदर्शनसंग्रहे—

"सहोपलम्भनियमादभेदो नीलतद्धियोः।
भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये" इति।

किन्त्विदं विज्ञानवादिमतमापातरमणीयम्। स्वप्नज्ञानवज्जागरितज्ञान-मपि निरालम्बनमिति न विचारसहं स्वप्नजागरितप्रत्यययोर्बाधाबाधाभ्यां वैधर्म्यतया स्वप्नप्रत्ययदृष्टान्तेन जाग्रत्प्रत्ययस्य निरालम्बनत्वापादनस्याशक्य-त्वात्। तथाचाह—भगवान् कृष्णद्वैपायनः, "वैधर्म्याच्च न स्वप्नादिवत्" (ब्र०सू०२,२,२९,) इति। यश्च विज्ञानार्थयोः सहोपलम्भनियमस्तेषां भ्रान्ति-कारकः सोऽपि न विचारं सहते-तथाहि-यदि विज्ञानार्थयोः साहित्येनोपलम्भः सहोपलम्भस्तर्हि हेतुरेव विरुद्धः, साहित्यस्याभेदविरुद्धभेदव्याप्तत्वेनाभेदे तदनुपपत्तेः। अथैकोपलम्भनियमस्तथापि न सहशब्दस्यैकत्ववाचकत्वाभावात्। अस्तु वैकत्ववाचकत्वं तथापि किमेकत्वेनोपलम्भ आहोस्विदेक उपलम्भो

विज्ञानार्थयोरिति, न तावदाद्यो विषयस्य बाह्यतया ज्ञानस्यत्वान्तरतयैकत्वे-नोपलम्भस्यासम्भवात्। नद्वितीय एकोपलम्भनियमस्योपाग्रोपेयभावहेतु-कत्वेनाभेदासाधकत्वात्। चैतन्यशून्यं समे महदादयोऽचेतना न वैनाशिक-बौद्धवच्चैतन्यं महदादेरिति। परिणामशीलं—प्रसवधर्मीतियावत्, प्रसवः परिणामः स एव धर्मः प्रसवधर्मः सोऽस्यास्तीति प्रसवधर्मि, कर्मधारयान्म-त्वर्थ इनिप्रत्ययः। ननु प्रसवो धर्मो यस्येति बहुव्रीहौ "धर्मादनिच् केवलात्" इति समासान्तेऽनिचि प्रसवधर्मेत्यनेनैव प्रसवधर्मवत्तालाभात् "न कर्मधार-यान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः" इति न्यायेन वृत्तिद्वयस्वीकरण-मसङ्गतमिति चेन्न सरूपविरूपपरिणामाभ्यां कदाचिदपि न वियुज्यत इत्येतदर्थ-कनित्ययोगाख्यातस्यावश्यकतया वृत्तिद्वयस्य सुसङ्गतत्वात्। योऽर्थो बहुव्री-हिणा ज्ञायते स एवार्थो यदि कर्मधारयान्मत्वर्थीयेन बोध्यते तदैव कर्मधारयात् मत्वर्थीयो न युक्तो यत्र तु विशेषार्थबुबोधयिषया कर्मधारयान् मत्वर्थीयः प्रयुज्यते तत्र तु स युक्त एव। यदि बहुव्रीहिस्तदर्थजनको भवेत्तदा न कर्मधारयान् मत्वर्थीयोऽन्यदा तु स्यादितिचेच्छब्देन बोधनादितिभावः। समं द्वयं—पूर्वोक्तधमैर्व्यक्ताव्यक्तद्वयं समानं किन्तु पुमान्—पुरुषः प्रतीपो विपरीतस्ताभ्यां व्यक्ताव्यक्ताभ्यां विलक्षणोऽत्रिगुणो विवेकी, असंहतोऽवि-षयोऽसाधारणश्चेतनोऽप्रसवधर्मीतिभावः। अत्रेदमवधेयम्—

व्यक्ताव्यक्तमतयावद्धर्मेण पुरुषस्य वैपरीत्यं न विवक्षितमपितु "सम्भूयकारि त्रिगुणात्मकञ्च" इत्यभिहितत्रिगुणात्मकत्वादिधर्मेणैवेति भावः।

सरलार्थः—व्यक्तमव्यक्तञ्चेत्युभयं त्रिगुणं, विषयः, सर्वसाधारणम्, अचेतनम्, परिणामि च, पुरुषस्तु ताभ्यां विपरीतोऽपि बोध्यः। अर्थात् पुरुषोऽत्रिगुणो विवेकी अविषयोऽसाधारणश्चेतनोऽप्रसवधर्मी चेतिभावः॥२०॥

पूर्वत्र श्लोके त्रिगुणात्मकञ्चेत्युक्तं तत्र किमात्मकास्त्रयो गुणास्तेषां प्रयोजनञ्च किमित्यभिधातुमुच्यते—

सुखात्मकं दुःखविमोहरूपं
सत्त्वादिकं भाति गुणत्रयञ्च ।
प्रकाशसञ्चालनयन्त्रणञ्च
प्रयोजनं तस्य गुणत्रयस्य ॥२१॥

सुखात्मकं—प्रीत्यात्मकं, दुःखविमोहरूपं—दुःखरूपम्—अप्रीत्यात्मकं, विमोहरूपं—विषादात्मकञ्च, गुणानां त्रयं सत्त्वादिकं भाति-प्रतीयते । तस्य गुणत्रयस्य प्रयोजनं प्रकाशसञ्चालनयन्त्रणञ्च—प्रकाशप्रवृत्तिनियामकमितिभावः ।

गुणानां त्रयमित्यत्र गुणपदेन "द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्षः" इति कणादसूत्रोक्ता धर्मविशेषा न ग्राह्या अपितु परार्थत्वसामान्यात् सत्त्वादयः सुखादिधर्मकास्तत्त्वविशेषा धर्मिणो बोध्याः । यथा राज्ञः सर्वार्थसाधका मन्त्रिप्रभृतयो गुणा इति व्यपदिश्यन्ते परार्थत्वात्तथा पुरुषरूपस्य राज्ञो भोगापवर्गरूपार्थसाधका ये सत्त्वादयस्तेऽपि परार्थत्वसामामान्याद् गुणा इति व्यवह्रियन्त इतिभावः । "प्रीत्यप्रीतिविषादाद्यैर्गुणानामन्योन्यं वैधर्म्यम्" इति साङ्ख्यसूत्रे "विषादाद्यैः" इति "आद्यशब्दोपादानाच्चात्र प्रीत्यप्रीतिविषादार्थकसुखादिशब्दानामुपलक्षणत्वं बोध्यं तेन सुखशब्देन अनुकम्पाऽर्जवमार्दवलज्जासन्तोषविवेकक्षमादीनां, दुःखशब्देन मानमदमत्सरलोभादीनां, मोहशब्देन वञ्चनकार्पण्यकौटिल्याज्ञादीनां ग्रहणमूह्यम् । न सुखं दुःखाभावाद् भिन्नमेवं दुःखमपि न सुखाभावाद् भिन्नमित्याकारकं यद् विरोधिमतं तस्य निरासाय "सुखात्मकमित्यत्रात्मग्रहणम् । नेतरेतराभावाः सुखादयोऽपितु भावाः, आत्मशब्दस्य भावार्थकत्वात् सुखमात्मा यस्य तत् सुखात्मकमेवं दुःखञ्च विमोहश्चेति दुःखविमोहौ तौ रूपे यस्य गुणद्वयस्य तत् दुःखविमोहरूपमिति निर्वचनीयम् । इतरेतराभावात्मकत्वे तु दुःखे ज्ञाते तदभावात्मकसुखज्ञानं सुखे ज्ञाते च

तदभावात्मकदुःखज्ञानमित्येवमन्योन्याश्रयापत्तेरितिसुखादीनां भावरूपतानुभवसिद्धा न विरुद्धेति भावः। गुणानां स्वरूपमुपवर्ण्य प्रयोजनमुच्यते— "प्रकाशसञ्चालनयन्त्रणञ्च" इति प्रकाशार्थं सत्त्वं सञ्चालनार्थं रजो यन्त्रणार्थं तम इति क्रमेणान्वयो बोध्यः। तत्र प्रकाशः—बुद्धिवृत्यादिरूप आलोकः सञ्चालनं-प्रवृत्तिर्यत्नो, यन्त्रणं—प्रकाशक्रियाभ्यां शून्यत्वं, तयोः प्रतिबन्ध इति यावत्। रजः प्रवर्तकत्वात् सर्वत्र लघु सत्त्वं प्रवर्तयेद् यदि तमसा गुरुणा न नियम्येत,। तमोनियतं तु सत्त्वं क्वचिदेव रजः प्रवर्तयतीति तमोनियमार्थमिति भावः।

सरलार्थः—सत्त्वं सुखात्मकं, रजो दुःखात्मकं तमो विषादात्मकं ज्ञेयमेवं सत्त्वस्य प्रकाशनं, रजसः प्रवर्तनं, तमसो नियमनमितिक्रमशस्तेषां गुणानां प्रयोजनं बोध्यम्॥ २१॥

गुणानां प्रयोजनं संदर्श्य सम्प्रति तेषां क्रियां संदर्शयति—

**अन्योऽन्यमेतत्कुरुतेऽवहेलां**
**परस्परालम्बनमादधाति।**
**अन्योऽन्यमुत्पादयते तथा तत्**
**सदाऽविनाभावतया विभाति॥ २२॥**

एतद् गुणत्रयमन्योऽन्यं परस्परमवहेलां तिरस्कारं कुरुतेऽन्योऽन्याभिभववृत्तयो गुणास्त्रय इति यावत्, गुणानां मध्येऽन्यतमेन गुणेन आविर्भूतेन धर्माधर्मनिमित्तकसुखादिरूपप्रयोजनबलात् स्वकार्य्योत्पादनोन्मुखेन गुणान्तरमवहेल्यते—तिरस्क्रियत इत्यर्थः। तथा हि सत्त्वं रजस्तमसी तिरस्कृत्य स्वसम्बन्धिनीं सुखरूपां शान्तां क्रियां प्राप्नोति सुखरूपेण परिणमते, रजः सत्त्वतमसी तिरस्कृत्य स्वसम्बन्धिनीं घोरां क्रियां प्राप्नोति दुःखरूपेण परिणमते, एवं तमः सत्त्वरजसी तिरस्कृत्य स्वकीयां मूढां क्रियां प्राप्नोति

विषादरूपेण परिणमते, अन्योऽन्यमवहेलनक्रियाया वास्तविकमन्तिमं वा प्रयोजनं गुणानां सुखाद्याकारेण परिणमनं, यत्र प्रयोजनं निमित्तं वा पुरुषस्य धर्माधर्मादिः, तथा अवहेला क्रिया तत्प्रयोजनसिद्धौ साधनमस्ति। एतत्पारस्परिकाभिभवद्वारा सत्त्वादिगुणत्रयं स्वकर्मप्रकाशनप्रवर्तननियमनं विधायैव सुखादिरूपेण परिणमते। यथा धर्मरूपप्रारब्धस्य भोगोपस्थितौ सत्यां सत्त्वं प्रबलं भूत्वा स्वेतरयोर्द्वयोर्गुणयोरवहेलां विधाय विषयं प्रकाशयत् सुखाकारेण परिणमतेऽनेन प्रकारेण व्यावहारिकः पुरुषः पूर्वकृतधर्मस्य सुखात्मकं भोगं लभते। अनयैव रीत्या दुःखात्मकं विषादात्मकञ्च भोगं लभते।

परस्परालम्बनमादधाति—परस्परम्-अन्योन्यम् आलम्बनम्-आश्रयमादधाति, अन्योन्याश्रयवृत्तयो गुणा इत्यर्थः। अत्राधाराधेयभावेन नाश्रयार्थोऽवगम्यते किन्तु यदपेक्षया यस्य क्रिया जायते स तस्याश्रयः।

## अयमभिप्रायः—

कुण्डबदरयोरिवाधाराधेयभावस्यात्रासंघटनाद् मुख्याश्रयार्थोऽत्र न लक्ष्यते तथापि सहकारित्वरूपो गौण आश्रयार्थोऽत्र स्वीकर्त्तव्यः।

तथाहि—सत्त्वं रजस्तमसोः कार्यभूतौ प्रवृत्तिनियमावाधारीकृत्य सहकारित्वेनादाय स्वकार्य्येण प्रकाशेन रजस्तमसी उपकरोति तयोस्साहाय्यं सम्पादयति। रजः सत्त्वतमसोः कार्य्यभूतौ प्रकाशनियमावाश्रित्य सहकारित्वेनादाय स्वकार्य्येण प्रवृत्त्या सत्त्वतमसोः साहाय्यमाचरति। एवं तमःसत्त्वरजसोः कार्य्यभूतप्रकाशप्रवृत्ती आश्रित्य स्वकार्य्येण नियमेन सत्त्वरजसोः साहाय्यं कुरुते। सत्त्वं हि स्वयमप्रवर्त्तकत्वेन रजः कार्यं प्रवृत्तिमाश्रित्य प्रकाशं करोति। रजश्च स्वयमप्रकाशकतया सत्त्वकार्यं प्रकाशमाश्रित्य प्रवृत्तिं करोत्येवं तमोऽपि स्वयमप्रकाशकतयाऽप्रवर्त्तकतया च सत्त्वरजसोः कार्य्यं प्रकाशं प्रवृत्तिञ्चाश्रित्य विषादमुपस्थापयति।

अन्योऽन्यमुत्पादयते—अन्योऽन्यजननवृत्तयो गुणा अन्यतमोऽन्यतममपेक्ष्य जनयतीत्यर्थः, जननञ्च परिणतिः सा चात्र गुणानां सदृशरूपा—साम्यावस्था रूपा प्रधानाख्या परिणतिरित्यर्थः प्रतिसर्गावस्थायां सत्त्वरजस्तमांसि सदृशपरिणामानि भवन्ति। परस्परालम्बनमादधातीत्यर्थकेनान्योऽन्याश्रयवृत्तय इत्यनेन विसदृशे परिणामेऽन्यतमो गुणोऽन्यतममाश्रयतेऽत्र तु सदृशे परिणामेऽन्यतमो गुणोऽन्यतमं गुणमाश्रयत इति न पौनरुक्त्यप्रसङ्गः। त्रिगुणात्मकत्वेन परस्परं संमिल्य सर्वे सर्वजनका इति निष्कर्षः। व्यक्तमेतद् योगभाष्ये—"एते गुणाः परस्परोपरक्तप्रविभागा इतरेतरोपाश्रयेणोपार्जितमूर्तयः" इत्यादिना।

ननु प्रलयावस्थायां प्रधानस्य गुणानां सदृशपरिणामत्वे प्रधानस्य हेतुमत्त्वं स्यात्तथा च हेतुमदनित्यमित्यादिना यद्धेतुमत्त्वं व्यक्तसाधर्म्यमुक्तं तदव्यक्तेऽतिव्याप्तमिति चेन्न, गुणानां सदृशपरिणामस्यैव प्रधानत्वेनाङ्गीकृततया तस्याहेतुमत्त्वात्। यत्र हि तत्त्वान्तरं विजातीयं तत्त्वान्तरेण जन्यते तत्र हि विसदृशपरिणामरूपं तत्त्वान्तरं हेतुमदित्युच्यतेऽत्र तु गुणा एव प्रधानमिति न तत्त्वान्तरमव्यक्तमिति प्रधानं न हेतुमदित्यर्थः।

ननु सृष्टिकाले गुणक्षोभे जायमाने साम्यावस्थाया विनाशेन प्रधानस्यानित्यत्वापत्तिरिति चेन्न, तत्त्वान्तरे लयाभावात्। साम्यावस्थातो नातिरिक्तं तत्त्वमवस्थावद् गुणत्रयमिति न तत्र लये तत्त्वान्तरलयव्यवहार इति भावः।

सदाऽविनाभावतया विभाति स्त्रीपुरुषवत्परस्परं मिथुनीभूता, अन्योन्यसहचरा—अविनाभाववर्त्तिनोऽन्योन्यमिथुनवृत्तय इति यावत्। अन्योन्याभिभवादीनां पूर्वोक्तानां न कादचित्कत्वमपितु नैरन्तर्य्यमिति बोध्यम्। सूचितञ्चैतदागमे—

"अन्योन्यमिथुनाः सर्वे सर्वे सर्वत्र गामिनः
रजसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः

तमसश्चापि मिथुने ते सत्त्वरजसी उभे
उभयोः सत्त्वरजसोर्मिथुनं तम उच्यते
नैषामादिः सम्प्रयोगो वियोगो वोपलभ्यते" ॥इति॥

सरलार्थः—सत्त्वरजस्तमांसि गुणा अन्योन्याभिभववृत्तयोऽन्योन्याश्रयवृत्तयोऽन्योन्यजननवृत्तयोऽन्योन्यमिथुनवृत्तयो बोध्याः ॥ २२ ॥

"प्रकाशसञ्चालनयन्त्रणञ्च, इत्यादिना बोधितं गुणानां त्रयं किन्नामकं पुनश्च प्रयोजनात् तादृशमिति बोधयितुमुच्यते—

लघुस्वभावोऽर्थविभासकारी
सांख्ये नये सत्त्वगुणश्चकास्ति ।
रजः समुत्तेजकमस्थिरञ्च
तमो गुरुत्वावरणस्वभावम् ॥ २३ ॥

सांख्यनये—सांख्यशास्त्रे सत्त्वगुणो लघुस्वभावोऽर्थविभासकारी च, अर्थात् सत्त्वमेव लघु प्रकाशकञ्चेति सांख्याचार्यैः कपिलादिभिः स्वीकृतम् ।

लाघवप्रकाशयोर्मध्ये वस्तुन ऊर्ध्वगमने यत्कारणं तल्लाघवम् । ननु गुरुत्वाभावेनैव कार्य्योद्गमने सिद्धे लघुत्वरूपगुणान्तराश्रयणं व्यर्थमत एव कणादेन मुनिना गुणेषु लघुत्वं न परिगणितमिति चेन्न, "गुरुत्वं वारिधरयोः पतनकर्मकारणमप्रत्यक्षं पतनकर्मानुमेयम्" इति परिलक्षितं यद् गुरुत्वं तद्विरोधिलाघवगुणस्य सांख्येऽङ्गीकृतत्वात् ।

यथाऽऽद्यपतनासमवायिकारणत्वेनातीन्द्रियं गुरुत्वमङ्गीक्रियते तथाद्योर्ध्वगमनकारणत्वेनातीन्द्रियं लघुत्वमप्यङ्गीकरणीयं न्यायसाम्यादनिश्चिताभावकारणत्वकल्पनाप्रेक्षया निश्चितभावकारणत्वकल्पनाया एवौचित्यादिति भावः ।

ननु यदि गुरुत्वाभावादन्यदूर्ध्वगमनहेतुत्वेन लघुत्वं गुणान्तरं स्वीक्रियते तर्हि लघुत्वादन्यत् तिर्य्यग्गमनहेतुत्वेनाऽपि किञ्चिद् गुणान्तरं स्वीकर्त्तव्यं स्यादन्यथाऽनिलगततिर्य्यग्गमनस्याऽऽकस्मिकत्वापत्तेरिति चेन्न, लघुत्वस्यैव तत्राऽपि हेतुत्वेनाङ्गीक्रियमाणतया उपर्युक्तदोषाप्रसक्तेः । न चोर्ध्वगमन-कारणं लाघवमित्युक्तौ पवनतिर्य्यग्गमनकारणे लाघवे लक्षणाव्याप्तिः, तिर्य्यग्गमनकारणं लाघवमित्युक्तौ चानलोद्गमनकारणे लाघवे लक्षणा-व्याप्तिरिति लक्षणाननुगम इति वाच्यं गुरुत्वजन्याधोगमनविभिन्नहेतुत्वं लघुत्वमित्यर्थस्य विवक्षितत्वेन लक्षणाननुगमरूपदोषस्य विलयात् ।

यथाऽनलोद्गमने हेतुर्धर्मविशेषो लाघवमेवं करणनां वक्ष्यमाणानामा-हरणधारणप्रकाशनसाधनानां त्रयोदशप्रकाराणामिन्द्रियाणां या वृत्तयः स्वस्वविषयग्रहणाय सन्निकर्षरूपव्यापारविशेषाः, तासां वृत्तीनां यत् पटुत्वं झटिति स्वविषयग्रहणौन्मुख्यरूपनैपुण्यं तत्र हेतुभूतो यो धर्मस्तल्लाघवं तच्च सत्त्वधर्म इति सत्त्वं लघ्वित्यर्थः ।

सात्त्विकाभिमानकार्य्येषु सात्त्विकेषु करणेषु विषयग्रहणरूपपटुत्वदर्शनेन तत्र सत्त्वधर्मो लघुत्वमस्तीत्यनुमेयमितिभावः ।

स्वयंमक्रियतया स्वरूपेणाप्रवृत्तिशीलतया स्वस्वकार्यप्रवृत्तिं प्रति प्रकाशादिरूपस्वस्वकार्य्ये स्वकीयप्रवृत्तिजननाय शिथिलीभूतेऽशक्ते सत्त्व-तमसी रजोगुणेन स्वकार्यजनने प्रवर्त्येते इति सूचयितुमुक्तम्—"रजः समुत्तेजकमस्थिरञ्च" इति ।

समुत्तेजयति—उपष्टभ्नाति—उपोद्बलयति जरातुरं यष्टिरिवोत्थापयति—प्रोत्साहयति शैथिल्यं निरस्य स्वकार्ये प्रवर्त्तयतीति समुत्तेजकं रज इति ।

कुत इति जिज्ञासायामुक्तम्—"अस्थिरम्" इति । यतो रजोऽस्थिरं चलं सक्रियत्वेन प्रवृत्तिशीलमतः समुत्तेजकमिति भावः ।

चलतया प्रवृत्तिशीलत्वेन सर्वतस्त्रिगुणात्मकमिन्द्रियादिकं स्वकार्य्ये प्रवर्त्तयद्रजस्तमोगुणेन क्वचिदेव कार्य्ये प्रवृत्तिक्षमं क्रियते यतोऽतस्तस्मात्तस्मात्

कार्याद्रजःप्रवृत्तिं रोधयित्वा वर्तमानं तमो नियामकमित्युच्यते, तदिद-मुक्तम्—'तमो गुरुत्वावरणस्वभावम्' इति। लघुत्वविरोधिस्थितिहेतु-भूतो धर्मो गुरुत्वं गुरुत्वादेवाऽऽवरणस्वभावं रोधनस्वभावं तम इति।

सरलार्थः—सत्त्वं लघुत्वादेवार्थप्रकाशकं, रजोऽस्थिरत्वादेव प्रवर्त्तकं तमश्च गुरुत्वादेव रोधकं सांख्यशास्त्रे सुप्रसिद्धम् ॥ २३ ॥

परस्परविरुद्धानामरीणामिव परस्परविरुद्धस्वभावानां सत्त्वादिगुणाना-मन्योन्यमेलनमेव तावदसम्भवि संमिल्यैकार्थानुष्ठानं तु दूरतोऽपास्तमिति कथं "परस्परालम्बनमादधाति" इत्यनेन तेषां गुणानामेकक्रियाकर्तृत्वं सूचितं सुसङ्गतं स्यादित्याकारिकाया आशङ्काया निरासायोच्यते—

परस्परं धर्मविरोधमाश्रिता
गुणत्रयोयं प्रतिभाति यद्यपि।
प्रदीपवत्किन्तु गतानुकूलतां
भोगापवर्गाय विचेष्टतेतराम् ॥ २४ ॥

क्वचिद्विरुद्धानामपि मिलित्वा एकार्थकारित्वमनुभूतं यथा प्रदीपे। यद्यपि कार्पासादिनिर्मितवर्तिसार्षपादितैलेऽनलदाह्याच्छादनलविरोधिनी तथापि हुतभुजा सह मिलिते एकां प्रकाशनरूपां क्रियां कुरुतः, तथैव परस्परम्—अन्योन्यं धर्मविरोधमाश्रिता विरुद्धस्वभावा गुणत्रयी सत्त्वादित्रयी प्रतिभाति-प्रतिभासते किन्तु तथापि प्रदीपवदनुकूलतां गता-प्राप्ता भोगापवर्गाय भोगमोक्षप्रदानाय विचेष्टतेतराम्—एकामनुकूलां क्रियां जनयति। व्यक्तञ्चेदं ब्रह्मगीते—

"प्रदीपस्य यथा कार्य्यं प्रकरोत्यर्थदर्शनम्।
वर्तिस्तैलं यथार्चिश्च विरुद्धाश्च परस्परम् ॥२९॥

विरुद्धं हि तथा तैलमग्निना सह सङ्गतम् ।
तैलं वर्तिविरोध्येव पावकोऽपि परस्परम् ॥३०॥
एकत्रस्थाः पदार्थानां प्रकुर्वन्ति प्रदर्शनम् ।"

( देवी भागवत स्क. ३ अ. ९ )

अनलदाह्यत्वाद्वर्तिस्तद्विरोधिनी तैलविन्दुनिपातनेनाऽनलस्यापि मन्दीभावाद् निर्वापाद्वा तैलमपि वह्निविरोधि तथापि वर्तितैलयोः परस्परं विरोधाभावान्न निखिलांशे सादृश्यं दृष्टान्तस्येतिचेदुच्यते—वातादीनां धातूनामितरेतरविरोध आयुर्वेदे वर्णितस्तथापि ते मिलित्वा देहस्य धारणं पोषणं स्थापनञ्च कुर्वन्ति यथा तथा सत्त्वादयो गुणा अप्यन्योन्यानुकूल्येन वर्तन्तेऽविरोधिन इव स्वस्वकार्यं कुर्वन्ति । यथा सत्त्वादीनि त्रीण्येवं तैलादीनि वातादीनि चापि त्रीण्येवेत्युदाहरणे त्रित्वसंख्यासाम्यमादृतं, त्रित्वसंख्यानादरे तु यथा विरुद्धौ धर्माधर्मौ मिलित्वा मानवकायमारभेते तथा सत्त्वादयोऽपि सम्भूय कार्यमेकं कुर्वन्तीति भावः ।

वस्तुतस्तु—"पुण्येन पुण्यं लोकं नयति, पापेन पापम्, उभाभ्यामेव मनुष्यलोकम्" इति प्रश्नोपनिषदि श्रुतत्वाद् धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याख्यान्यष्टौ बुद्धे रूपाणि, वृत्तयश्च सुखदुःखमोहरूपाः परिणामविशेषास्तेषामतिशया उत्कर्षा एव विरुद्ध्यन्ते यदा धर्म उत्कृष्टत्वेनोद्भूतो भवति तदाऽधर्मो नोत्कृष्यते, यदा सुखोत्कर्षो भवति तदा च न दुःखमुत्कृष्टं भवतीत्येवं परस्परं सामान्यान्यपकृष्टानि दुर्बलानि तूत्कृष्टैःसह वर्तन्त इत्यर्थकाद् "रूपातिशया वृत्त्यतिशयाश्च परस्परेण विरुद्ध्यन्ते सामान्यानि त्वतिशयैः सह प्रवर्त्तन्ते" इति योगभाष्यात् तुल्यबलानामेव विरोधो नातुल्यबलानामित्यभ्युपगमान्नात्र विरोधप्रसङ्गः ।

अत्रेदमवधेयम्—दिव्यशरीरे सुखाद्यात्मके वा प्रत्यये जननीये सत्त्वं प्रधानं रजस्तमसी चाङ्गे सहायके, मानवकाये दुःखात्मके वा प्रत्यये जननीये

प्रधानं रजोऽङ्गे च सत्त्वतमसी, एवं तिर्यङ्निकाये मोहाद्यात्मके वा प्रत्यये जननीये प्रधानं तमः सत्त्वरजसी चाङ्गेऽनया रीत्या गुणप्रधानभावेन मिलित्वैकार्थसम्पादकत्वान्नात्र विरोधलेशोऽपीति भावः ।

गुणा इत्थम्भूताः कुत इति निरूपयति—"भोगापवर्गार्थ" इति पौरुषेय-भोगापवर्गसम्पादनाय गुणाः सम्भूय प्रवर्तन्त इति भावः ।

ननु सुखदुःखमोहात्मकत्वेन भावानां त्रैरूप्यं नोचितं नहि यदा यस्य सुखात्मकं यच्चन्दनादिकं ग्रीष्मर्त्तौ तत्तदा तस्य दुःखात्मकं मोहात्मकञ्चेति प्रत्यक्षमीक्ष्यते, यदि सर्व एव भावाः सुखदुःखमोहस्वभावा भवेयुस्तर्हि समेषामविशेषेणैव सर्वेषु भावेषु सुखदुःखमोहात्मकं विज्ञानं भवेन्न तूपलभ्य-मानं प्रतिपदार्थव्यवस्थितं, ब्रह्मसूत्रभाष्ये भामतीकारा अप्येवमेव भणन्ति—यदि पुनरेते एव सुखादिस्वभावास्ततः स्वरूपत्वाद्धेमन्तेऽपि चन्दनं सुखं स्यान्नहि चन्दनं कदाचिदचन्दनं, निदाघेऽपि कुङ्कुमपङ्कः सुखं स्यान्न ह्यसौ कदाचिदकुङ्कुमपङ्कः, एवं कण्टकं क्रमेलकस्य यथा सुखं तथा मनुष्यादीनामपि प्राणभृतां सुखं स्यान्न ह्यदः कांश्चित्प्रत्येव कण्टकमिति तस्मादसुखादिस्वभावा अपि चन्दनकुङ्कुमादयो जातिकालाद्यवस्थाद्यपेक्षया सुखदुःखादिहेतवो न तु स्वयं सुखादिस्वभावा इति चेन्न, परस्परविरोधिनो ये सुखदुःखमोहास्ते सर्वत्राविशेषेण विद्यमाना अपि नाकस्मादुद्भवन्ति येन सर्वान् प्रत्यविशेषेण ते आव्रजेयुरपि तु स्वस्वाभिव्यक्तौ निमित्तान्यपेक्षन्ते निमित्तान्यपि न यानि कानिचिदपि तु स्वास्वाभिव्यक्तेरनुकूलानि सुखदुःखमोहात्मकानि, तत्र सुखं स्वोद्भवे धर्मापेक्षं सुखात्मकं सत्त्वं निमित्तमपेक्षते । दुःखञ्च स्वोद्भवे-ऽधर्मापेक्षं दुःखात्मकं रजो निमित्तमपेक्षते, मोहश्च स्वोद्भवेऽधर्मापेक्षं मोहात्मकं तमो निमित्तमपेक्षते, इत्याद्यर्थस्यापेक्षिततया तेषां गुणानां त्रैरूप्ये बाधका-भावात् । जातिरूपनिमित्तसहकारिणोऽभावान्न मनुष्यादीनां कण्टकं सुखं, निदाघकालरूपनिमित्तसहकारिणोऽभाच्च न हेमन्ते चन्दनं सुखावहमित्यादि-रूपेण जातिकालादयोऽपि निमित्तसहकारिणो बोध्याः ।

ननु धर्मादयो निमित्तविशेषाऽपि सर्वत्राविशिष्टा इति पूर्वोक्तदोषस्तदवस्थ एवेति चेन्न, सर्वस्य प्रतिक्षणपरिणामित्वाद् यदा यस्य चित्ते धर्मः फलोन्मुखः सन् उत्कृष्टो भवति तदा तस्य चित्ते तच्चित्तसन्निहितवस्तुनि च सत्त्वमुत्कटं भूत्वा रजस्तमसी तिरस्कृत्य तं प्रति सुखात्मकं प्रत्ययं जनयति, यदा चाधर्मः फलोन्मुखः सन् उत्कृष्टस्तदा रज उत्कटं भूत्वा सत्त्वतमसी तिरस्कृत्य दुःखात्मकं प्रत्ययं जनयति, एवमेवाधर्म एव फलोन्मुखः सन् उत्कृष्टस्तदा तम उत्कटं भूत्वा सत्त्वरजसी तिरस्कृत्य मोहात्मकं प्रत्ययं जनयतीत्येवं निमित्तानां कादाचित्कत्वात् सर्वेषां सर्वत्र सर्वदाऽविशिष्टज्ञानत्वाप्रसक्तेः। अमुमेवार्थमुपोद्बलयन्ति मान्या व्यासदेवा अपि—"सांख्यपक्षे पुनर्वस्तु त्रिगुणं चलञ्च गुणवृत्तमिति धर्मादिनिमित्तापेक्षं चित्तैरभिसम्बध्यते, निमित्तानुरूपस्य च प्रत्ययस्योत्पद्यमानस्य तेन तेनात्मना हेतुर्भवति" इत्यादिशब्दकदम्बैः। उदाहरणञ्चात्र—यथा वारिवाहका वृष्ट्या कृषीवलानां सुखं जनयन्ति, पान्थानाञ्च दुःखं, विरहिणाञ्च मोहमेवं न्यायपरायणो नृपः शिष्टानां सुखमुत्पादयति, दुष्टानां दुःखं मोहञ्चेति। देवीभागवतेऽप्युक्तम्—

यथा काचिद्वरा नारी सर्वभूषणभूषिता।
हावभावयुताकामं भर्तृप्रीतिकरीभवेत्॥ स्क. ३ अ. ८

इत्यादिना। विज्ञवाचस्पतिमिश्रेणाऽपि सांख्यतत्त्वकौमुद्यामभिहितम्—"एकैव स्त्री रूपयौवनसम्पन्ना स्वामिनं सुखाकरोति (आनुकूल्येनानन्दयति) तत्कस्य हेतोः स्वामिनं प्रति तस्याः सुखरूपसमुद्भवात्, सैव स्त्री सपत्नीर्दुःखाकरोति (प्रातिकूल्येन पीडयति) तत्कस्य हेतोस्ताः प्रति तस्याः दुःखरूपसमुद्भवाद्, अनया च स्त्रिया सर्वे भावा व्याख्याताः" इत्यादिवाङ्मयविन्यासेनेति।

ननु कामिनीरूपोऽर्थः कथमेको नाना विज्ञानहेतुर्न ह्येकस्मात्कारणात् कार्यभेद इति चेन्न, यत्कान्तचित्तवृत्ति सुखात्मकप्रत्ययं प्रति निमित्तं

तद्धर्मापेक्षं कान्ताकायगतं सुखात्मकं सत्त्वं, यत् सपत्नीचित्तवृत्तिदुःखात्मकप्रत्ययं प्रति निमित्तं तदधर्मापेक्षं कामिनीकायगतं मोहात्मकं तम इत्यर्थस्य विवक्षिततयोपर्युक्तदोषानवकाशाद्, निमित्तभेदात्कार्यभेदस्य सुप्रसिद्धत्वात्।

अत्रेदमवधेयम्—

यस्मादेकत्र सहवर्त्तनाऽवलोकनात्सुखप्रकाशलाघवानां युगपदेकत्रोत्पत्तौ न विरोधस्तस्माद्विरोधिभिः सुखदुःखमोहैरिवाविरोधिभिः सुखप्रकाशलाघवैर्निमित्तभेदा,नापेक्ष्यन्तेऽपि तु सात्विकैः सुखादिभिर्धर्मापेक्षं केवलं सत्त्वमपेक्ष्यते, राजसैश्च दुःखादिभिः केवलमधर्मापेक्षं रजोऽपेक्ष्यते, तामसैश्च मोहादिभिः केवलमविद्यापेक्षं तमोऽपेक्ष्यत इति भावः।

सरलार्थः—यद्यपि सत्त्वरजस्तमांसि गुणाः परस्परं विरुद्धस्वभावास्तथापि भोगापवर्गवशतोऽनुकूलतां गताः प्रदीपवदेकार्थक्रियां साधयन्तीति भावः ॥ २४ ॥

प्रत्यक्षगोचराणां घटादीनां स्थूलपदार्थानामनुभूयमानाविवेकित्वादिधर्माणामस्तित्वस्य संसिद्धावपि अव्यक्तादीनामप्रत्यक्षाणामविवेकित्वादिधर्माः कथं गम्या इति बोधयितुमुच्यते—

**त्रैगुण्यादविवेकितादिविविधा धर्माः सुसिद्धिं गता**
**यत्रैते न विभान्ति तत्र न हि तत्सिद्धं गुणानां त्रयम्।**
**कार्यं विद्यत एव कारणगुणस्वारूप्यसम्प्राप्तिम-**
**दव्यक्तञ्च ततः सुसिद्धिमयते यस्माद्धि तत्कारणम् ॥२५॥**

व्यक्ताव्यक्तादिसूक्ष्मेषु त्रैगुण्याद्धेतोरविवेकितादिविविधा धर्माः सुसिद्धिं गताः सिध्यन्ति। अनुमानप्रकारश्चेत्थम्—प्रधानमहदभिमानादीनि अविवेकित्वादिधर्मवन्ति त्रिगुणत्वादिति। यद्यत्त्रिगुणात्मकं तत्तदविवेकित्वादिमद्, यथानुभूयमानं व्यक्तं पृथिव्यादि, इत्यन्वयव्याप्तिः। अन्वय-

व्याप्त्याऽविवेकितादिधर्मान् समर्थ्येदानीं व्यतिरेकव्याप्त्या समर्थयितु-मुच्यते—"यत्रैते न विभान्ति तत्र न हि तत् सिद्धं गुणानां त्रयम्" इति। यत्र पदार्थे एतेऽविवेकितादिधर्मा न सन्ति तत्र तद्गुणानां त्रयं न सिद्धं—निष्पन्नं भवति। यथा पुरुषपदार्थेऽविवेकितादिधर्मा न विद्यन्तेऽतः पुरुषो न त्रिगुण इति। व्यतिरेकव्याप्तिश्च यद्यदविवेकित्वादिधर्माभाववत् तत्तत्त्रिगुणत्वाभाववद् यथा पुरुषः। यदातीन्द्रियं प्रधानादिकमेव पक्षकुक्षौ प्रविष्टं तदा त्रैगुण्यादितिहेतुरन्वय्यपि यदा तु निखिलमेव व्यक्ताव्यक्तं तत्त्वं पक्षीक्रियते तदा पक्षातिरिक्तान्वयसहचारोदाहरणस्थलासत्त्वेन त्रैगुण्या-दिति हेतुर्व्यतिरेक्येव। अव्यक्ते सिद्धे तत्राऽविवेकित्वादयो वर्तन्ते न वेति विचारावसर उदेति किन्त्वद्यावधि न सिद्धमव्यक्तमिति तत्राविवेकित्वादयो धर्मा वर्त्तन्त इत्याकारकविचार एव निष्फल इत्याशङ्काया निरासायोच्यते—"कार्यं विद्यत एव कारणगुणस्वारूप्यसम्प्राप्तिमदव्यक्तञ्च ततः सुसिद्धि-मयते यस्माद्धि तत्कारणम्" इति। कारणगुणस्वारूप्यसम्प्राप्तिमत् कारण-गुणकं कार्य्यं महदादि विद्यत एव ततस्तदनन्तरं यस्माद् महदादिकार्या-ल्लिङ्गादव्यक्तं-प्रधानं-कारणं सुसिद्धिमयते-प्राप्नोति।

अयमभिप्रायः—कारणगुणात्मकं कार्य्यं दृश्यते यथा तन्त्वादिगुणात्मकं कार्य्यं पटादिकं, तथा सुखदुःखमोहात्मकैर्महदादिकार्यैः सुखदुःखमोहात्मकं कारणमव्यक्तमवश्यमनुमातव्यमित्यनुमानप्रमाणेनाव्यक्तस्याभीप्सितस्यसिद्धिः सुसम्पन्नेति भावः।

सरलार्थः—व्यक्ताव्यक्ततत्त्वे निखिले त्रैगुण्याद्धेतोरविवेकित्वादयो धर्मा व्यतिरेकव्याप्त्या सुसिद्धाः। यत्र पुरुषतत्त्वेऽविवेकित्वादयो न सन्ति न तत्र त्रैगुण्यम्। कारणगुणात्मकं कार्य्यं भवतीति न्यायेन सुखदुःख-मोहात्मककार्य्येण महदादिना सुखदुःखमोहात्मकं कारणमनुमानप्रमाणगम्य-मव्यक्तं सुसिद्धमिति भावः॥ २५॥

वैशेषिकनये नैयायिकनये च व्यक्ताद्व्यक्तं जायते परमाणुर्व्यक्त-पदार्थोऽस्ति ततः द्व्यणुकस्य ततः त्रसरेणोरिति क्रमेण पृथिव्यादिव्यक्त-पदार्थानामुत्पत्तिः। कारणगुणप्रक्रमानुरोधात् पृथिव्यादिषु रूपादयो गुणाः क्रमेण जायन्तेऽतो व्यक्तादेव व्यक्तानां तद्गुणानाञ्चोत्पत्तिः संङ्गता व्यर्थःप्रयासोऽव्यक्ताऽन्वेषणस्य इत्यत उक्तम्—

कूर्माङ्गवत्कारणकार्य्यभागो
लये समं कारण एव लीनम्।
कार्य्यं मितं कारणतुल्यमास्ते
हेतुः सुशक्तः खलु शक्यकार्ये॥ २६॥

कारणकार्य्यभागः कारणञ्च कार्य्यञ्च कारणकार्य्ये तयोर्भागः कारण-कार्यभागः। अत्र भागपदं विभागपरं द्वन्द्वान्ते श्रूयमाणं प्रत्येकमभि-सम्बद्धयत इति रीत्या कारणभागः कार्य्यभागश्चैतादृशः कार्यकारण-विभागः कूर्माङ्गवत्सांख्ये स्वीकृतः। यथा कूर्मकायेऽङ्गानि सन्त्येव वहिर्निःसरन्ति विभज्यन्ते, अयं कूर्मकाय इमान्यङ्गानीति, एवं निविश-मानानि तस्मिन्नाविर्भवन्ति, तथैव कारणान्मृत्तिकापिण्डात् सुवर्णपिण्डाच्च कार्याणि घटादयःकटकादयश्च सन्त्येवाभिव्यज्यन्ते सन्त्येव च कार्याणि-धरादीनि कारणात्तन्मात्रादभिव्यज्यन्ते विभज्यन्ते, सन्त्येव च कार्याणि तन्मात्राण्यहङ्कारात्कारणादाविर्भवन्ति विभज्यन्ते सन्नेवाहङ्कारः कार्यं कारणाद् महतः सन्नेव च महान् मूलाव्यक्तात्। परमाव्यक्ते साक्षात्परम्परया च सम्बद्धः समस्तकार्यकलापस्यायं विभागः। यतः संहारे स्वस्वकारणे तिरोभूतं सत् कार्य्यमनभिव्यक्तं भवत्यतस्तादृग-नभिव्यक्तं कार्य्यमपेक्ष्यैव तत्कारणमव्यक्तमित्युच्यते न तु प्रधानवत्मुख्यम-व्यक्तत्वमादाय—यथा विनाशावस्थायां घटकटकादयो मृत्पिण्डे सुवर्णपिण्डे च विलीनाः सन्तस्तत्तदाकारेण परिणताः सन्तोऽव्यक्तसंज्ञकास्तथैव

प्रलयावस्थायां पृथिव्यादयस्तन्मात्रेषु विलीनाः सन्तः स्वापेक्षया तन्मात्राण्यव्यक्तयन्ति, तन्मात्राणि स्वकारणेऽहङ्कारे विलीनानि सन्ति स्वापेक्षयाऽहङ्कारमव्यक्तयन्ति, अहङ्कारःस्वकारणे महति विलीनः सन् स्वापेक्षया महान्तमव्यक्तयति, महांश्च स्व कारणे प्रधाने विलीनः सन् स्वापेक्षया प्रधानमव्यक्तयति, प्रधानस्य तु न कुत्रापि विलीनतेति तन्निखिलकार्य्याणामव्यक्तावस्था। सोऽयमविभागो महदादीनां लयः प्रधाने। तस्मात्कारणे कार्य्यस्य सत एव विभागाविभागाभ्यामव्यक्तं कारणमस्तीति गम्यते। अयमेव कारणात्कार्य्यस्याऽविभागः सूचितः श्लोके "लये समं कारण एव लीनम्" इति, यतो लये प्रलये समं सर्वं महदादिकार्यं कारणे प्रधान एव लीनं सदविभक्तमतः समेषां कारणमव्यक्तमङ्गीकरणीयमित्यर्थः। अतश्चाव्यक्तं कारणमस्तीत्युच्यते "हेतुः सुशक्तः खलु शक्यकार्ये" इति। खलु निश्चयेन सुशक्तः-सुशक्तिमान्-हेतुःकारणं शक्यकार्ये सम्पादनीयकार्ये कारणनिष्ठशक्तेरेव कार्य्योत्पादादशक्तस्य कारणत्वाभावात्कार्य्यस्यानुत्पत्तेः। कारणे विद्यमाना शक्तिः कार्य्यस्यानगतावस्थाख्याव्यक्तत्वाद्भिन्ना न, सत्कार्ये स्वीक्रियमाणे कार्य्यस्याव्यक्ततां विहाय न काचनान्या कारणशक्तिरन्यस्यां शक्तौ न किञ्चिद् गमकञ्च। तैलोपादानभूतानां तिलानां सिकतातो वैशिष्ट्यमिदमेव यत्तिलेष्वेवाव्यक्तरूपेण तैलमस्ति न तु सिकतासु।

अयमभिप्रायः—

यथा घटपटतैलादयः सर्वाणि कार्य्याणि स्वस्वकारणनिष्ठविशिष्टशक्तित उत्पद्यन्त तथैव महत्तत्त्वादीन्यपि कार्याणि कस्माच्चिच्छक्तिविशेषादेव जायन्त इति स्वीकर्त्तव्यम् तथा च यथा घटपटतैलोत्पादिकानां शक्तीनामाश्रयी मृत्पिण्डतन्तुतिलादयः सन्ति तथैव महत्तत्त्वाद्युत्पादिकानां शक्तीनामप्याश्रयो नूनं स्वीकर्त्तव्यस्तथा च तादृशशक्तीनामाश्रय एवाव्यक्तमिति भावः।

अत्रानुमानप्रकारश्चेत्थम्

"महत्तत्त्वादिकं शक्तिरूपाव्यक्तावस्थाजन्यं कार्य्यत्वाद् घटवत्" अनेनानुमानेनाव्यक्तावस्थारूपशक्तेःसिद्धौ 'सा शक्तिः क्वचिदाश्रिता शक्तित्वाद् घटाद्युत्पादकशक्तिवत्" इत्याद्यनुमानादिना तादृशशक्तेराश्रयत्व-स्याप्रतिहततया तादृशशक्तेराश्रयत्वेन च प्रधानस्य सिद्धिर्निर्वाधैवेति भावः।

कारणशक्तितः कार्योत्पादनात् कारणात्कार्य्याविर्भावात् तिरोभावाच्चा-व्यक्तस्य परमाव्यक्तता सिध्यति। सा च महत्तत्त्वस्यैव स्वीक्रियताम् महत्तत्त्वभिन्नस्य महत्तत्त्वकारणीभूतस्य मूलाव्यक्तस्य स्वीकारे को लाभ इत्यत उक्तम्—"कार्यं मितम्" इति कार्य्यं महदादिरूपं मितं परिमितम्। अर्थाद् महदादितत्त्वानां कार्य्यभूतानां परिमितत्वादव्यापित्वात् परिच्छिन्न-त्वात्तत्र विश्रामो न विधातव्योऽपि तु तस्याऽपि महतः कारणं परमाव्यक्तम-न्वेषणीयम्। अत्रानुमानाकारश्चेत्थम्—विवादास्पदं महदादिविशेषा अव्यक्तकारणकाः परिच्छिन्नत्वाद् घटादिवत्। घटादयो हि परिच्छिन्ना मृदाद्यव्यक्तकारणका दृष्टाः। उक्तञ्चैतत् पूर्वं कार्यस्याव्यक्तावस्थैव कारण-मिति महतो यत्कारणं तदेव परमाव्यक्तम्।

ननु अव्यक्तमपि यत्किञ्चिदव्यक्तकारणकमव्यक्तत्वान्महदादि-वदित्यनुमानेनाऽन्यत्परतरमव्यक्तं कुतो न कल्प्यत इति चेन्नोहितस्यो-पर्युक्तस्यानुमानस्याव्यापित्वरूपोपाधिना कवलिततयाऽप्रामाणिकत्वेन परमा-व्यक्ततः परतराव्यक्तकल्पनायां प्रमाणाभावात्।

अतश्च विवादास्पदं विशेषा अव्यक्तकारणकाः "कारणतुल्यमास्ते" इत्युक्तेः। अर्थात् कार्य्यं कारणतुल्यं कारणसदृशं कारणसमन्वित-मास्ते भवति।

अयमभिप्रायः—विवादास्पदं विशेषा अव्यक्तकारणकाः समन्वयात्। विभिन्नपदार्थानामनुरूपता समन्वयः। महदादयः सुखदुःखमोहात्मकाः प्रतीयन्तेऽतस्तेषां कारणमपि सुखदुःखमोहात्मकमेव किञ्चिदङ्गीकरणीयं

तदेव चाव्यक्तम् । अनुरूपाणां घटकटकादीनां यथाऽनुरूपमव्यक्तं कारणं मृत्पिण्डसुवर्णादि तथैव सुखदुःखमोहात्मकनिखिलवस्त्वनुरूपं सुखदुःख-मोहात्मकमव्यक्तं समेषां कार्य्याणां कारणमिति निष्पन्नम् ।

सरलार्थः—सृष्टिकाले कारणकार्य्यविभागात्, प्रलयेऽविभागात्, कारणशक्तितः कार्य्योत्पादात्कार्यस्य परिच्छिन्नत्वात् समन्वयाच्च महदादीनां हेतोरव्यक्तस्य सिद्धिर्बोध्येति भावः ॥ २६ ॥

अव्यक्तं संसाध्य सम्प्रति तस्य परिणामप्रकारमुपस्थापयति—

तस्मात्प्रधानं महादादिमूलं
गुणत्रयात्तत्परिणामि जातम् ।
समेत्य तत्संविदधाति सृष्टिं
नानाविधां भिन्नगुणाश्रयत्वात् ॥ २७ ॥

तस्मात्पूर्वोक्तकारणाद् महदादीनां बुद्ध्यादीनां मूलं कारणं प्रधानं प्रकृतिः स्वीकर्त्तव्या । नन्वप्रवृत्तिशीलस्य पुरुषस्येव कारणत्वायोगात् प्रधानस्य प्रवृत्तिमत्त्वं वक्तव्यं यत्केन प्रकारेण प्रधानं प्रवर्तते ? "प्रधानं स्थित्यैव वर्तमानं विकाराकरणादप्रधानं स्याद्, गत्यैव वर्तमानं विकारनित्यत्वादप्रधानं स्याद्" इति पञ्चशिखाचार्य्योक्तरीत्याऽन्योन्य-मसंमिलितानां गुणानां यः कार्य्यजनननानुगुणः साम्यपरिणामपरम्परावाही परिणामः स स्थितिसंस्कारस्तेन प्रवर्तते ? विलक्षणतत्तत्कार्यजननोन्मुखो यो गुणानां वैषम्यपरिणामपरम्परावाही परिणामः स गतिसंस्कारस्तेन वा प्रवर्तते ? आद्ये सदैव स्थितिमत्त्वेन विकारानुत्पादनात् प्रधीयते जन्यते विकारजातमनेनेति प्रधानपदव्युत्पत्तिनिमित्तकप्रधानव्यवहारालाभेना-प्रधानमेव स्यान्न प्रधानं ( सर्वविकारजनकत्वरूपं यन्मूलकारणस्य प्रधानत्वं तन्न स्यादिति भावः ) द्वितीये सर्वदैव कार्योत्पादने व्यासक्तत्वान्न

कदाचित्कार्यं संहरेदिति विकाराणां सदातनत्वमापद्येत, प्रधीयते विलीयते विकारजातं यस्मिन्निति व्युत्पतिनिमित्तकप्रधानव्यवहारश्च लुप्येत, इत्याशङ्कायां स्थितिसंस्कारेणैव स्थित्या वा प्रधानं प्रवर्तते न गत्या, गतिसंस्कारेण वा प्रवर्तते, इत्येतयोः पक्षयोरन्यतरपक्षावधारणरूप-नियमाभावात् कदाचित् स्थित्या प्रवर्तते कदाचिच्च गत्या प्रवर्तते इत्येव-मनियममाख्यातुमुच्यते—"गुणत्रयात्तत्परिणामि जातम्" इति प्रलयकाले गुणत्रयात्तत्प्रधानं परिणामि जातं प्रलयावस्थायां सत्त्वरजस्तमांसि स्वरूप-परिणामानि जायन्ते नहि स्वभावः प्रयोजनमपेक्षते सहकारिणोऽदृष्टादेर-भावाद् विकाराजनने प्रलयसंरक्षणमेव वा प्रयोजनं ज्ञेयम् । क्षणपरिणामिनो हि भावा ऋते चितिशक्तेरिति न्यायाद् गुणा नापरिणम्य क्षणमप्यवतिष्ठन्ते तथा च सत्त्वं सत्त्वरूपेण रजो रजोरूपेण तमस्तमोरूपेण च प्रलया-वस्थायां प्रवर्तते ।

अत्रेदमवधेयम्—प्रधानस्य प्रवर्त्तनप्रकारद्वयम्, एकं तावत् सत्त्वर-जस्तमसामन्योन्यगुणप्रधानभावानपेक्षं साम्येन स्वरूपमात्रेणावस्थानरूपं सदृशपरिणामपरम्परावाहि,यत्किल प्रलयकालिकम् । द्वितीयञ्च सत्त्वर-जस्तमसां परस्पराङ्गाङ्गिभावापेक्षं साम्यावस्थानात्प्रच्युतिरूपं विसदृश-परिणामपरम्परावाहि, एतच्च सृष्टिकालिकम् । सर्गप्रलयरूपं यत्कार्यद्वयं तद्गुणानां साम्यवैषम्याभ्यां जायते साम्यावस्थातः प्रलयः, वैषम्यावस्थातश्च सर्ग इत्यर्थकेन "साम्यवैषम्याभ्यां कार्यद्वयम्" इति सांख्यसूत्रेणाऽपि तदेव समर्थितं भवति । अमुमेवार्थमुपोद्बलयति "उभयथा चास्य प्रवृत्तिः प्रधान-व्यवहारं लभते नाऽन्यथा" इति वदन् पञ्चशिखाचार्य्योऽपि । सर्ग कालिकीं द्वितीयां प्रवृत्तिं बोधयितुमुक्तम्—"समेत्य तत्संविदधाति सृष्टिम्" इति परस्परं समेत्य मिलित्वा तत् गुणत्रयात्मकं प्रधानं सृष्टिं सर्गं संविद-धाति करोति । ईश्वरकृष्णकृतकारिकायां "समुदयाच्च" इति समुदयाद् हेतोरयमेवार्थः स्वीकृतो वर्णितश्च विद्यते तत्तट्टीकाकृद्भिः । तत्र हि समेत्योदयः

समुदयः-परस्परं मिलित्वा आविर्भावः समवाय इति यावत्। समवायश्चात्र परस्परसम्मिश्रणं न नैयायिकाभिमतः सम्बन्धविशेषः "न समवायोऽस्ति प्रमाणाभावात्" इति सांख्यसूत्रोक्तेः।

गुणानां समवायोऽयं परस्परविरुद्धानां तुल्यबलानां च न सम्भवतीति गुणप्रधानभावेन समवायो वक्तव्यो, गुणप्रधानभावश्च वैषम्यं न्यूनाधिक्यं विनाऽसम्भव इति वैषम्यमवश्यमङ्गीकर्त्तव्यं, वैषम्यमप्यभिभाव्याभिभावकभावं विनाऽसम्भवमित्यभिभाव्याभिभावकभावोऽपि स्वीकर्त्तव्यस्तथा चादृष्टमहिम्ना पूर्वं गुणेषु क्षोभो जन्यते ततश्च कश्चिद् गुण आविर्भूतोऽभिभावको भवति कश्चिच्चानभिव्यक्तोऽभिभाव्यो भवति ततश्च साम्यावस्थानात् प्रच्युतिरूपं वैषम्यमुपजन्यते ततश्च परस्परं गुणप्रधानभावेन मिलित्वा महदादिरूपेण परिणामो जायत इत्येवंविधं यत्प्रवर्तनं तद् द्वितीयमिति भावः।

नन्वेकरूपाणां गुणानां विविधरूपा प्रवृत्तिः कथमित्यत उक्तम्—"भिन्नगुणाश्रयत्वादिति" विविधगुणाधारत्वादित्यर्थः। यद्यपि सत्त्वप्रधानं गुणरूपमेकमेव तथाप्यप्रधानतत्तद्गुणतारतम्येन प्रधानरूपस्यानेकरूपतापत्त्या परिणामभेदोपपत्तिः। पूर्वं तत्तद्गुणप्रधानत्वेन रूपत्रयं (सत्त्वप्रधानमेकं रूपं, रजःप्रधानमपरं, तमःप्रधानञ्चान्यदिति रूपत्रयं) भूयश्चैकैकस्य तमोलेशोपरक्तरजउपसर्जनसत्त्वप्रधानरजोलेशसंवलिततमउपसर्जनसत्त्वप्रधानत्वादिरूपेण विविधरूपत्वम्, इत्येवमेकैकगुणाश्रयेण यो विशेषो विविधरूपत्वंतस्माद् विविधरूपात्परिणामाद् विविधरूपा प्रवृत्तिरिति भावः।

सरलार्थः—कारणकार्यविभागादेरनुमीयमानं महदादिकारणं प्रधानमेव तच्च प्रलये सदृशपरिणामकं सर्गे च विषमपरिणामकमेकैकगुणाश्रयविशेषादितिबोध्यम्॥ २७॥

पूर्वोक्तार्थं द्रढयितुमुच्यते—

विमुक्तमम्ब्वेकरसं पयोदा-
दासाद्य भिन्नान् वसुधाविकारान् ।
अनेकमाधुर्यगुणान् प्रसूते
यथा तथाऽव्यक्तमिदं विधत्ते ॥ २७ ॥

पयोदाद्—मेघाद् विमुक्तं पतितमम्बु जलमेकरसमेकास्वादकमपि वसुधाविकारान्—पृथिवी परिणामान् भिन्नान्—अनेकानासाद्य-प्राप्य यथाऽनेकमाधुर्यगुणान्-नानारससम्पन्नान् पदार्थान् प्रसूते-उत्पादयति तथा-ऽव्यक्तमिदं-प्रधानमिदं विधत्ते-सृजति ।

अयमभिप्रायः—

यथा मेघोन्मुक्तं जलमेकरसमपि पार्थिवपरिणामान् तत्तन्नारिकेल-तालतालीविल्वचिरविल्वतिन्दुकामलकप्राचीनाऽमलककपित्थादिफलान्यवाप्य मधुराम्ललवणतिक्तकषायकट्वादिनानारसरूपेण परिणमते तथैवैकैकगुण-समुद्भवात् प्रधानगुणानाश्रित्याप्रधानगुणाः परिणामविविधाद् विविधान् परिणामान् जनयन्तीति भावः ।

सरलार्थः—'यथा मेघच्युतं जलमेकरसमपि नानावसुधाविकारान् अवाप्य विविधमाधुर्यादिगुणाकारेण परिणमते तथा प्रलये प्रत्येकं गुण एकरूपोऽपि सर्गकालेऽङ्गाङ्गिभावमवाप्य विविधः सन् विविधान् परिणामान् उत्पादयतीति भावः ॥ २८ ॥

अव्यक्तस्येयं प्रवृत्तिः पुरुषार्था (भोगापवर्गार्था) पुरुषे च प्रमाणाभाव इत्याशङ्काया निरासायेदमुच्यते—

पुंसोऽतिरिक्तं सकलं परस्मै
विनिर्मितं तत्त्वकदम्बकञ्च ।

गुणत्रयाद्भिन्नतमस्तथाऽयं
पुमानधिष्ठानपदप्रतिष्ठः ॥ २६ ॥

पुंसः—पुरुषादतिरिक्तं भिन्नं सकलं सम्पूर्णं तत्त्वकदम्बकं तत्त्वसंघातः परस्मै—अन्यस्मै—विनिर्मितं—सृष्टमित्यव्यक्तादेर्व्यतिरिक्तः पुरुषोऽनुमेयः, तथाहि—अव्यक्तमहदादयः परार्थाः संघातत्वाद् यथा शयनासनाङ्गरागादयः ।

ननु तूलिकोपधानप्रच्छादनपटादिना शयनादीनां संघातत्वेऽप्यव्यक्तादेरनेकात्मकत्वाभावान्न संघातत्वमिति चेन्न, सुखदुःखमोहात्मकत्वेनाव्यक्तादीनां संघातत्वस्य सम्प्रतिपन्नत्वात् ।

न चैवमपि शयनासनादयः संघाताः संहतशरीरार्था न त्वव्यक्ताद्यतिरिक्तमात्मानं प्रति परार्थास्तथा च संघातत्वहेतोः संघातान्तरस्यैव सिद्धिर्नत्वसंहतस्य पुरुषस्येति वाच्यं संघातस्य संघातान्तरार्थकत्वेऽपि तस्याऽपि संघातत्वात् संघातान्तरार्थकत्वं तस्याऽपि तस्याऽपीत्यादिरूपेणानवस्थाप्रसङ्गात् ।

नन्वसंहतपरार्थत्वसिद्धिरनुपपन्ना संघातपरार्थत्वमादाय परार्थत्वस्यविश्रान्तिसम्भवादिति चेन्न, उक्तहेतुनाऽनुमीयमानस्य संघातरूपत्वे तस्याऽपि परार्थत्वकल्पनाऽऽवश्यकी सोऽपि परः संघातरूप एव तदा तस्यापि परापेक्षत्वेनानवस्था स्यादित्यनवस्थारूपबाधकतर्कसहकारेण परार्थत्वमात्रसाधकत्वेन हेतुनाप्यसंहतपरार्थत्वसिद्धौ बाधकाभावात् ।

न च यादृशसाध्यसामानाधिकरण्यं हेतो दृष्टान्ते दृश्यते तादृशसाध्यस्यैव साधने हेतोः सामर्थ्यस्य युक्ततया प्रकृते दृष्टान्ते हेतोः संहतपरार्थत्वरूपस्यैव परार्थत्वस्य समानाधिकरणत्वेन तेन हेतुना विलक्षणस्यासंहतपरार्थत्वस्य सिद्धिरनुपपन्नेति वाच्यम्, दृष्टान्तदृष्टसर्वधर्मानुरोधेनानुमानमिच्छतः सर्वानुमानोच्छेदापत्तेर्दुर्निवारत्वात् ।

नन्वेवं सिसाधयिषितस्य परस्यासंहतत्वसिद्धावपि तस्यात्रिगुणत्वादिकत्वे प्रमाणाभाव इति चेन्न, संहतत्वस्य त्रिगुणत्वादिव्यापकतया व्यापकस्य संहतत्वस्याभावे व्याप्यस्य त्रिगुणत्वादेरभावस्य सिद्धेः सुघटत्वाद् व्यापकासत्त्वे व्याप्यासत्त्वस्य नियतत्वात्, तस्माद् मूले "गुणत्रयाद्भिन्नतमस्तथायम्" इति वदता असंहतः परो विवक्षितः स च पुरुष एव ।

हेत्वन्तरादपि पुरुषस्यानुमितिः सम्भवतीत्याह "पुमानधिष्ठानपदप्रतिष्ठः" इत्यधिष्ठानपदप्रतिष्ठोऽर्थादधिष्ठाता पुमानस्त्येवेति भावः

अयमाशयः—

यद्यत्सुखदुःखमोहात्मकं तत्तत्सर्वं परेण चेतनेनाधिष्ठितं दृष्टं यथा सुखदुःखमोहात्मकं रथादि परेणाश्वचालकेन चेतनेन सारथिनाऽधिष्ठितमेवं बुद्ध्यादि सुखदुःखमोहात्मकं परेण चेतनेनावश्यमधिष्ठितं स्वीकार्यमिति तदधिष्ठातृतया पुरुषसिद्धिरपरिहार्या ।

सांख्यपुरुषस्य निर्गुणत्वेन निष्क्रियत्वात्कथमधिष्ठातृत्वं ? प्रवर्तनव्यापारवत एव सारथ्यादेरधिष्ठातृत्वदर्शनादिति तु न शङ्क्यं निष्क्रियस्याप्ययस्कान्तमणेः सन्निधिमात्रेणाधिष्ठातृत्वदर्शनाद् व्यापारवत एवाधिष्ठातृत्वमिति नियमस्याऽसिद्धतया सन्निधिमात्रेण पुरुषस्याधिष्ठातृत्वे बाधकाभावात् । तथा च सूत्रम् (अ. १ सू. ९६) "तत्सन्निधानादधिष्ठातृत्वं मणिवत्" इति ।

कुमारिलस्वामिनोऽपि—

"न च सर्वत्र तुल्यत्वं स्यात्प्रयोजककर्मणाम् ।
चलनेन ह्यसिं योद्धा प्रयुङ्क्ते च्छेदनं प्रति ॥८५॥
सेनापतिस्तु वाचैव भृत्यानां विनियोजकः ।
राजा सन्निधिमात्रेण विनियुङ्क्ते कदाचन ॥८६॥
तस्मादचलतोऽपि स्याच्चलने कर्तृतात्मनः" इति
( आत्मवादे पञ्चमसूत्रे )

सरलार्थः—महदादिरूपतत्त्वसंघातार्थितया, गुणत्रयभिन्नतया, अधिष्ठातृतया चाव्यक्तादितत्त्वसंघाताद्भिन्नः पुरुषः सुतरां सिद्धः ॥२९॥

पुरुषस्य साधकान्यपराणि बीजान्यपि निरूप्यन्ते—

विलोक्य तत्त्वं महदादिभोग्यं
भोक्ता सदा स्वीकरणीय आस्ते ।
कैवल्यलाभाय यतः प्रवृत्ति
स्तस्मात्पुमान् सिद्ध्यति संशयो नो ॥ ३० ॥

महदादिभोग्यं—सुखदुःखमोहात्मकं बुद्ध्यादितत्त्वं विलोक्य समीक्ष्य तस्य भोक्ता—आस्वादकः कश्चन सदा सततं स्वीकरणीयः-स्वीकर्तव्य आस्ते-वर्तते भोग्यत्वाद्धेतोर्भोक्ता-पुरुषोऽनुमेय इति यावत् । तथाहि—सुखाद्यात्मकं बुद्ध्यादिकं स्वातिरिक्तेन केनचिद्भोक्त्रानुभवितव्यं भोग्यत्वादोदनवत् ।

न च बुद्ध्यादीनामेव भोक्तृत्वसम्भवात् स्वातिरिक्तेन केनचिद् भोक्त्रेति रिक्तं वच इति वाच्यम्, एकस्य कर्मकर्तृभावविरुद्धतया स्वस्य स्वेन भोग्यत्वासम्भवात् । न ह्यसिधारा आत्मानं छिनत्ति वह्निर्वाऽऽत्मानं दहति ।

असङ्गस्य पुरुषस्य भोक्तृत्वमसम्भवीति मन्यमानानां मते "भोक्ता" इत्यस्य द्रष्टेत्यर्थः, भोग्यमित्यस्य दृश्यमर्थस्तथा च भोग्या दृश्या बुद्ध्यादयो न द्रष्टारमन्तरेण दृश्यास्तस्मादस्ति दृश्यबुद्ध्याद्यतिरिक्तो द्रष्टा स एव पुरुषः दृश्यत्वेन द्रष्टुरनुमानादित्यर्थः । अनुमानाकारश्च—

बुद्ध्यादयो द्रष्टृसापेक्षा दृश्यत्वात् घटादिवत् । वस्तुतोऽसङ्गस्य पुरुषस्य दर्शनकर्तृत्वासम्भवाद् बुद्ध्युपाधिकमेव द्रष्टृत्वं पुरुषस्येति स्वीकर्त्तव्यमेतच्च "द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः" इति सूत्रे योगभाष्ये व्यक्तम् । एवञ्च द्रष्टृत्ववद् भोक्तृत्वस्यापि सम्भवादाद्यव्याख्यानमपि पेशलतामर्हत्येवेति बोध्यम् ।

अतश्च पुरुषस्य सिद्धिः "कैवल्यलाभाय यतः प्रवृत्तिः" इति यतो दिव्यलोचना महर्षयः शास्त्राणि च कैवल्योपायोपदेशाय प्रवर्तन्ते यदि कश्चन केवलीभवनयोग्यो न भवेत्तदा महर्षीणां शास्त्राणाञ्चेयं कैवल्यो-पायोपदेशप्रवृत्तिर्नोपपद्येत, अतः कश्चन केवलीभवनयोग्योऽभ्युपेतव्यः स एव पुरुषः।

नन्वेतावताऽपि कैवल्यभाजो बुद्ध्यादयो वर्तन्तां कुतः पूर्वोक्तहेतोः पुरुषसिद्धिरिति चेन्न, आत्यन्तिकदुःखत्रयध्वंसलक्षणस्य कैवलस्य बुद्ध्यादीना-मसम्भवात्। बुद्ध्यादयो हि दुःखाद्यात्मकाः कथं स्वभावाद् वियुक्ताः कर्तुं शक्यन्ते स्वभावस्य हानासम्भवात् तदतिरिक्तस्य पुरुषस्य दुःखाद्यनात्मकत्वाद् बुद्ध्यादेर्वियोगः कर्त्तुं शक्यस्तस्मात्कैवल्यलाभार्थं महाधियामागमानाञ्च कैवल्यप्राप्त्युपायोपदेशप्रवृत्तेर्दर्शनाद् बुद्ध्याद्यतिरिक्तः पुरुषोऽभ्युपेय एव तत्र संशयः-संदेहो नो न कार्य इति भावः।

सरलार्थः—महदादीनां भोग्यत्वाद् महाधियां महर्षीणां शास्त्राणाञ्च कैवल्यलाभोपायोपदेशार्थं प्रवृत्तेश्च बुद्ध्याद्यतिरिक्तः पुमानस्तीत्यनुमीयत इति भावः ॥ ३० ॥

अनया रीत्या पुरुषस्यास्तित्वं संसाध्य तस्य प्रतिदेहमेकत्वमनेकत्वं वेति निर्णेतुमुक्तम्—

**एकस्य पुंसो जनने च मृत्यौ**
**भवेत्समेषां न जनिर्मृतिश्च।**
**सर्वेन्द्रियञ्च प्रतिदेहमन्यत्**
**तथैककाले नहि वृत्तिरेका ॥ ३१ ॥**

एकस्य पुंसः-पुरुषस्य जनने-उद्भवे समेषां-सर्वेषां पुरुषाणामुद्भवो न भवतीति शेषः। अपूर्वदेहेन्द्रियमनोऽहङ्कारबुद्धिसुखाद्यनुभवैः पुरुषस्या-

भिसम्बन्धो जननं ( जन्म ) न तु पुरुषस्य परिणामस्तस्यापरिणामित्वात् । प्राप्तानाञ्च देहादीनां परित्यागो मृत्युः ( मरणम् ) न तु पुरुषस्य परिणामस्तस्य कूटस्थनित्यत्वात् । सर्वेन्द्रियाणि बुद्धयादीनि त्रयोदश, तथा चैषां समेषां प्रतिदेहं भिन्नत्वात् पुरुषवहुत्वस्य सिद्धिः। निखिलदेहेषु एकस्मिन्पुरुषेऽङ्गीक्रियमाणे व्यवस्था नोपपन्ना स्यात् । तथाहि-एकस्मिन्पुरुषे जायमाने नहि सर्वे जायन्ते, म्रियमाणे नहि सर्वे म्रियन्ते, अन्धादौ चैकस्मिन् न सर्वेऽन्धादयो भवन्ति । सुषुप्ते चैकस्मिन्न सर्वे सुषुप्ता भवन्ति, उपरते एकस्मिन् सर्वे उपरता न भवन्तीति प्रतिक्षेत्रं पुरुषो भिन्नः स्वीकर्त्तव्यः । न च प्रतिशरीरं पुरुषो न भिन्नोऽपि त्वेक एव शरीराद्युपाधि-भेदाद् व्यवस्थापि सूपपन्ना स्यादिति शङ्क्यम्, पाणिस्तनाद्युपाधिभेदेनाऽपि जन्ममरणादिव्यवस्थापत्तेः । न हि हस्ते पतिते युवतिर्मृता, स्तनादौ च जाते युवतिर्जातेति केनाऽपि व्यपदिश्यते ज्ञायते वा ।

यद्यपि स्तनादौ जाते वाल्यं विहाय युवत्वं प्राप्तः संघातस्तथापि तदवच्छेदेन तदधिष्ठात्र्या न जातत्वव्यवहारः । सैवेयमबलेति प्रत्यभिज्ञानात् । भवन्मते तु कायोपाधिजन्मना तदवच्छेदेनाऽऽत्मनि जातत्वव्यवहारवद् देहावयवजन्मनाऽप्यात्मनि जातत्वव्यवहारः स्यादुपाधित्वाविशेषात् स च बाधित इत्यौपाधिकभेदकल्पनया न निर्वाह इति भावः ।

ननु देहस्यैवोपाधित्वमङ्गीक्रियते न देहावयवानामतिप्रसङ्गापादकत्वाद् यदाहुः "आरोपे सति निमित्तानुसरणं न तु निमित्तमस्तीत्यारोपः" इति, अर्थादव्यवस्थायां प्रसक्तायां तद्वारणायोपाधिरूपं किञ्चिन्निमित्तमनुसरणीयं न तूपाधिरस्तीत्याश्रित्याव्यवस्थाऽऽपादनीयेति भावः, इति चेदेवमपि न निर्वाह एकस्मिन्घटे विनष्टे तद्धटमुक्तस्याप्याकाशप्रदेशस्य घटान्तरेण भूयस्सम्बन्धाद् घटाकाशत्वापत्तिरिवैकोपाधिना विमुक्तस्यापि पुरुषस्य पुनरुपाध्यन्तरेण सम्बन्धाद् बद्धत्वव्यवहारापत्त्या बद्धमुक्तव्यवस्थानुपपत्तेस्तादवस्थ्यात् ।

सांख्यसूत्रकारास्तु—"जन्मादिव्यवस्थातः पुरुषबहुत्वम्" इति स्वमतमुपवर्ण्य पुनरुपाधिभेदमङ्गीकृत्य व्यवस्थायामाशङ्कितायाम् "उपाधिभेदेऽप्येकस्य नानायोग आकाशस्येव घटादिभिः" "उपाधिर्भिद्यते न तु तद्वान्" इति समाधानमुपस्थापयामासुः।

उपाधिभेदेऽप्येकस्याऽपि पुरुषस्य नानायोगोऽस्त्येव यथैकस्यैवाकाशस्य घटकुड्यादिनानायोगः, अवच्छेदकभेदेनैकस्यात्मन एव विविधजन्ममरणाद्यापत्तिः कायव्यूहादाविवेति न सम्भवति व्यवस्था एकः पुरुषो जायते नापरः इत्यादिरित्यर्थः। नह्यवच्छेदकभेदेन कपिसंयोगतदभावत्येकस्मिन्नेव वृक्षे व्यवस्था घटत एको वृक्षः कपिसंयोग्यन्यश्च न, इति सूत्रार्थ इति विज्ञविज्ञानभिक्षवः।

ननु चैतन्यस्यैक्येऽपि तत्तदुपाधिविशिष्टस्यातिरिक्ततामभ्युपगम्य व्यवस्थोपपादनीया, तत्राह—"उपाधिर्भिद्यते" इति उपाधिरेव नाना न तु तद्वानुपाधिविशिष्टोऽपि नानाभ्युपेयो विशिष्टस्यातिरिक्तत्वे नानात्मताया एव शास्त्रान्तरेऽभ्युपगमापत्तेरित्यर्थः। न हि छत्रादिमाँश्चैत्रः केवलाच्चैत्राद्भिन्नो भवतीति भावः। किञ्च बन्धभाजो विशिष्टत्वे विशेषणावियोगेन विशिष्टनाशान्न मोक्षोपपत्तिरित्यपि ध्येयम्।

नन्वेवमपि "एकोदेवः सर्वभूतेषु गूढः" इत्याद्यैकात्म्यप्रतिपादनश्रुतीनां विरोध इति चेन्न, एकत्वश्रुतीनाञ्च प्रमाणान्तरविरोधात् कथञ्चिद्देशकालविभागाभावेन भक्त्याप्युपपत्तेरिति मिश्रैरुक्तत्वात्।

अयंभन्त्रः—"अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" इति बद्धमुक्तजीवभेदप्रतिपादकश्रुतिविरोधाज्जन्ममरणादिव्यवस्थादर्शनरूपप्रत्यक्षप्रमाणविरोधाच्चात्मनां व्यापकत्वेन सर्व एवात्मानः सर्वत्र सन्निहिता इति विभिन्नदेशत्वाभावेन विभागाप्रतीतेः, भक्त्या गौणत्वेनैकत्वव्यवहार इति भावः।

विज्ञविज्ञानभिन्नवस्तु—अवैधर्म्यरूपाभेदप्रतिपादनपरत्वे तासां श्रुतीनां तात्पर्यमिति वर्णयाञ्चक्रुः ।

"नाद्वैतश्रुतिविरोधो जातिपरत्वात्" इत्युद्धोपयन्तश्चित्सामान्यमादायैकत्वव्यवहारः पुरुषस्य गौणो न तु वास्तविक इति सांख्यसूत्रकाराः ।

प्रतिशरीरं पुरुषभेदेऽयमपि हेतुः "तथैककाले नहि वृत्तिरेका" इति तथा तेनैव प्रकारेण एककाले-युगपद्धि-यतः सर्वेषामेका वृत्तिःप्रयत्नो न दृश्यत इति शेषः । अतः पुरुषभेदः । अनुमानाकारश्च—

शरीराणि नाना पुरुषाधिष्ठेयानि, अयुगपत्प्रवृत्तिमत्त्वात्, रथादिवत् । चलनात्मकः प्रवृत्तिरूपो व्यापारो देहधर्मः, चलनात्मकः प्रवर्त्तनारूपः प्रयत्नश्च चेतनधर्मस्तथा च प्रवृत्तेरयौगपद्यदर्शनेन प्रवर्त्तनारूपप्रयत्नस्यानैक्यं प्रयत्नायौगपद्येन च तदाश्रयचेतनानां परस्परं भेदः ।

ननु प्रयत्नरूपपरिणामस्य बुद्धिधर्मत्वेनापरिणाम्यात्मधर्मत्वाभावात् कथमन्यधर्मायौगपद्येनाऽऽत्मभेदसाधनमिति चेन्न, औपचारिकतद्धर्मत्वस्याङ्गीकृतत्वया भेदसाधने वाधायोगात् । योगभाष्यादौ तथैवाभिधानात् । तथाहि "पुरुष उपचर्यते उपचारेण व्यवह्रियते कुतश्चिन्निमित्तादतस्मिंस्तद्व्यवहार उपचारः, उपचारनिमित्तश्च स्वस्वामिभावसम्बन्धः" "यथा विजयः पराजयो वा योद्धृषु वर्तमानः स्वामिनि राज्ञि व्यपदिश्यते" इति ।

उदके कम्पमाने तत्प्रतिविम्बितनिशाकरकम्पनमिव प्रयतमानायां बुद्धौ तत्प्रतिविम्बितचेतनोऽपि प्रयतमान इवेति भावः ।

प्रतिशरीरं पुरुषस्यैक्ये त्वेकशरीरावच्छेदेन प्रयतमाने तस्मिन् सर्वशरीरावच्छेदेन प्रयत्नोऽनुभूयेत ततश्च सर्वाणि शरीराणि युगपद् व्याप्रियेरन पुरुषनानात्वे तु नायं दोषपङ्कलेशः ।

सरलार्थः—यत एकस्य पुरुषस्योत्पत्तौ न हि सर्वेषामुत्पत्तिः, मरणे च न हि सर्वेषां मृत्युः, अन्धे बधिरे च न हि सर्वेषामान्ध्यबाधिर्यादिकम्,

एवमेकस्मिन् शरीरे प्रयतमाने पुरुषे न हि सर्वशरीरेषु युगपत्प्रयत्नोऽनुभव-पथमधिरोहतीति प्रतिदेहं पुरुषो नाना नैकं इति बोध्यम् ॥ ३१ ॥

. प्रतिदेहं पुरुषभेदस्य साधकोऽपरोऽपि हेतुः—

**क्वाप्यस्ति सत्त्वं रजसश्च राज्यं**
**तमस्ततिः क्रीडति यत्र तत्र ।**
**इत्थं विलोक्यैव मतीश्वराणां**
**पुंसो बहुत्वाय सदा प्रवृत्तिः ॥ ३२ ॥**

क्वापि—कुत्रचित्–कस्मिँश्चित् पुरुषे सत्त्वं सत्त्वप्राधान्यमनुभूयते कस्मिँश्चिच्च रजसो राज्यं रजःप्राधान्यं यत्र तत्र—कुत्रचित् तमसां ततिः–तमस्ततिः— तमःसमूहस्तमःप्राधान्यमित्थमेतादृशीं स्थितिं विलोक्यैव दृष्ट्वैव मतीश्वराणां–विपश्चितां सांख्यानां पुंसो बहुत्वाय पुरुषस्यानेकत्वाय सदा—सततं प्रवृत्तिः—प्रयत्नः ।

अत्रेदमवधेयम्—सात्त्विकराजसतामसप्रभेदेनोत्तममध्यमाधमप्राणिभेदाः प्राप्यन्ते—केचन खलु सत्त्वनिकायाः–सत्त्वबहुला यथोर्द्ध्वस्रोतसो देवादयः, केचन रजोबहुलाः यथा मनुष्याः, केचन तमोबहुला यथा तिर्यग्योनयः । यद्येक एव पुरुषः भवेत्तर्हि तेषु तेषु सत्त्वादिनिकायेषु वैचित्र्यं न भवेत् । अर्थात् पुरुषैक्ये उच्चावच्चप्राणभृत्प्रपञ्चो न भवेदपि तु एकविध एव । पुरुषबहुत्वे तूत्तममध्यमाधमभावो दोषविधुरः सङ्गत एवेति भावः ।

सरलार्थः—कुत्रचित् प्राणभृति सत्त्वबाहुल्यं क्वचन रजोबाहुल्यं कुत्रचन तमोबाहुल्यं चेति सांख्यसिद्धान्तसिद्धं पुरुषबहुत्वं सुसम्पन्नं युक्तियुक्त-मितिभावः ॥ ३२ ॥

उपर्युक्तदिशा पुरुषस्यानेकत्वं संसाध्य विवेकज्ञानोपयोगित्वेन पुरुषस्य विविधान् धर्मान् निर्दिशति—

गुणादिधर्मप्रतिकूलधर्मः
पुमानयं चित्खलु साक्ष्यकर्त्ता ।
तटस्थ आत्यन्तिकदुःखशून्यो
द्रष्टृत्वभावं गत एव सिद्धः ॥ ३३ ॥

गुणादिधर्मप्रतिकूलधर्मः—त्रिगुणत्वादिधर्मविरुद्धधर्मकः खलु निश्चयेनायं पुमान्—पुरुषश्चित्—चेतनः साक्षी, अकर्त्ता आत्यन्तिकदुःखशून्य आत्यन्तिकदुःखध्वंसात्मककैवल्यविशिष्टस्तटस्थः—उदासीनो द्रष्टृत्वभावं गतोऽर्थाद् द्रष्टा एव सिद्धः सिद्धिं गतः । अत्रेदमवधेयम्—

व्यक्ताव्यक्तसाधर्म्यनिरूपणप्रसङ्गे—"सम्भूयकारी त्रिगुणात्मकञ्च" इत्यादिरूपा ये त्रिगुणत्वादिधर्माः प्रोक्तास्तद्विरुद्धा येऽत्रिगुणत्वं, विवेकित्वमविषयत्वमसाधारणत्वं चेतनत्वमप्रसवधर्मित्वञ्चेत्यादयो धर्मास्त एवात्र प्रतिकूलधर्मपदग्राह्यास्तथा च साक्षित्वद्रष्टृत्वे ज्ञातव्ये, यतश्चेतनो द्रष्टा नाचेतनः, साक्षी च दर्शितविषयो—यस्मै दर्श्यते विषयः स साक्षी यथा-जगति वादिप्रतिवादिनौ विवादास्पदविषयं साक्षिणे दर्शयतस्तथैव प्रधानमपि स्वचेष्टितं विषयं पुरुषाय प्रदर्शयतीति साक्षी पुरुषो, न चाचेतनो विषयो वा, विषयं दर्शयितुं शक्य इत्यविषयत्वाच्चैतन्याच्च पुरुषः साक्षी तत एव द्रष्टाऽपि । इन्द्रियप्रणालिकया बुद्धौ तत्तदाकारेण परिणतायां पुरुषेण दृश्यायां सत्यां तदारूढाः पदार्था अपि दृश्या भवन्तीति तेषां पदार्थानां द्रष्टा पुरुषः । यदाहुः "द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः" "द्रष्टा बुद्धेः प्रतिसंवेदी पुरुषः" इति । अयमर्थः—शुद्धोऽप्यपरिणाम्यपि दृशिमात्रः—चिन्मात्रः पुरुषः प्रत्ययानुपश्यः बुद्धिवृत्तिमनुपश्यन्द्रष्टा भवति । संवेदित्या बुद्धेः प्रतिरूपोऽर्थाकारायां बुद्धौ सत्यां तत्प्रतिबिम्बितत्वेन तदनुकारी ।

अत्रैगुण्यादस्य कैवल्यम्, स्वाभाविकादेव सुखदुःखमोहरहितत्वाद् आत्यन्तिकदुःखत्रयाभावरूपं कैवल्यं सिद्धम् । अत्रैगुण्यादेव तटस्थः, माध्यस्थ्यविशिष्टः । सुखी सुखेन संतुष्यन्, दुःखी दुःखं द्विषन्मध्यस्थो न भवति सुखदुःखविरहितस्तु 'मध्यस्थस्तटस्थ उदासीन इति व्यवह्रियते ।

ननु विवदमानयोरुभयोरपि पक्षपाती हितैषी वा मध्यस्थः, विवदमानयोरुभयोरपि उपेक्षक उदासीन इति तयोर्भेदः, अत एव "सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु" इत्यादौ तयोर्भेदेनोपादानं तथा च तटस्थमध्यस्थयोरभेदोऽप्रामाणिक इति चेन्न, श्रुत्वा युद्धोद्यमं रामः कुरूणां सह पाण्डवैः । तीर्थाभिषेकव्याजेन मध्यस्थः प्रययौ किल ॥ (भा. स्क. १० अ. ७८) इत्यादावुदासीनार्थकमध्यस्थपदप्रयोगावलोकनेन रागद्वेषराहित्यमात्रं साम्यमादाय तयोरभेदस्याप्युपपत्तेः । महदादिवत्सम्भूयकारित्वाभावादपरिणामित्वेनाजनकत्वाच्चाकर्त्ता पुरुष इति भावः ।

सरलार्थः—त्रिगुणत्वादिधर्मरहितश्चेतनोऽयं पुरुषः साक्षी, द्रष्टा, केवलः, तटस्थोऽकर्त्ता च साङ्ख्ये स्वीकृतः ॥ ३३ ॥

ननु जानाम्यहं करोम्यहमिति प्रत्यये द्रष्टृत्वकर्तृत्वयोरेकाश्रयत्वेनोपलम्भात् साङ्ख्ये मते च पुरुषस्याकर्तृत्वात् कर्तुश्चाचैतन्यात् कृतिचैतन्ययोः सामानाधिकरण्यं कथमुपपद्येत इत्याशङ्काया निरासायोक्तम्—

**तस्यात्मनः सन्निधिमाप्य तत्त्वं**
**जडात्मकं चेतनवद्विभाति ।**
**संसर्गतोऽकर्तरि चेतनेऽपि**
**कर्तृत्वमारोपितमस्ति पुंसि ॥ ३४ ॥**

चैतन्यं—प्रकाशकत्वं तच्चात्मधर्मः, कर्तृत्वं-कृतिमत्त्वं तच्च बुद्धिधर्मः, त्रिगुणत्वात् परिणामित्वाद् बुद्धेः कर्तृत्वं, निर्गुणत्वादपरिणामित्वात्पुरुषस्या-

कर्तृत्वं द्रष्टृत्वादिकञ्चेत्यादिपूर्वोक्तयुक्तितो भिन्नाधिकरणके चैतन्यकर्तृत्वे साधिते। एवं स्थितावपि सांख्ये कृतिचैतन्ययोः सामानाधिकरण्यस्य प्रतीतिस्तु भ्रमात्मिकैव न प्रमात्मिका। तथा चाहुर्योगसूत्रकाराः—"दृग्दर्शनशक्त्योरेकात्मतेवास्मिता" इति। अर्थादस्मिताख्याविवेककृता सामानाधिकरण्यप्रतीतिः। दृक्शक्तिः पुरुषो दर्शनशक्तिर्बुद्धिस्तयोर्द्रष्टृदृश्ययोरविद्यापादिता यैकरूपता सा अस्मिता-अविवेक-इति योगसूत्रस्योपर्युक्तस्यार्थः। भ्रान्तिकारणञ्च प्रकृतिपुरुषयोः संयोगः। उक्तञ्च "भ्रान्तिबीजं तत्संयोगः" इति।

ननु पुरुषस्यासङ्गस्य प्रकृत्या सह कथं संयोगः संयोगाभावे च पूर्वोक्ता भ्रान्तिः कथमुपपन्नेति चेन्न संयोगपदस्य सन्निधानार्थकतयाऽदोषात्।

उक्तञ्च सांख्यसूत्रे—

"उपरागात्कर्तृत्वं चित्सान्निध्यात्" इति (अ० १ सू० १६४)

पुरुषस्य यत्कर्तृत्वं तद् बुद्ध्युपरागाद् बुद्धेश्च या चित्ता सा पुरुषस्य सान्निध्यादिति भावः। एतदेवोपस्थापयति "तस्यात्मनः सन्निधिमाप्य तत्त्वम्" इत्यादिना तस्य पूर्वोक्तस्य चेतनस्यात्मनः-पुरुषस्य सन्निधिं-सन्निधानमाप्य-प्राप्य जडात्मकं तत्त्वं-बुद्ध्यादिकं चेतनवच्चैतन्यमापन्नमिव विभाति-प्रतीयते अकर्त्तरि-कर्तृत्वशक्तिहीने चेतनेऽपि पुंसि-पुरुषे संसर्गतो बुद्ध्युपरागात् कर्तृत्वमारोपितं-भाक्तमस्ति-विद्यते। यद्यपि जानामीति प्रत्ययः पुरुषाधिकरणकः करोमीति प्रत्ययश्च बुद्ध्यधिकरणकस्तथाऽपि बुद्धिपुरुषयोर्विवेकाग्रहात् तद्धर्मयोरपि कृतिचैतन्ययोः साङ्कर्यात् सामानाधिकरण्यम्। यथा अनलायसोः परस्परं संयोगविशेषात् परस्परधर्मारोपस्तथा बुद्धिपुरुषयोरपीति तत्त्वम्।

अयमभिप्रायः—

बुद्ध्यादिकमचेतनमपि चेतनसंयोगाच्चेतनमिव प्रतीयते। अतो बुद्धौ जानामीति प्रत्यय उपपन्नः। एवं बुद्ध्यादिरूपेण परिणतानां गुणानां

कृतिमत्त्वेऽपि बुद्ध्युपरागात् ( तत्प्रतिविम्बितत्वात् ) उदासीनोऽपि पुरुषः कर्त्तेव प्रतीयतेऽतः पुरुषे करोमीति प्रत्ययश्चोपपन्नो भवतीति भावः ।

सरलार्थः—चेतनस्य पुरुषस्याकर्त्तुः सन्निधानमवाप्य बुद्ध्यादितत्त्वमचेतनमपि चेतनमिव प्रतीयते । बुद्धिप्रतिविम्बितत्वाच्चाऽकर्त्ताऽपि पुरुषः कर्त्तेव प्रतीयत इति भावः ।

"तस्यात्मनः सन्निधिमाप्य" इत्युक्तं तथापि भिन्नयोश्चेतनाचेतनयोः पुरुषप्रधानयोरपेक्षां विना न सन्निधिः, न चापेक्षेयमुपकार्योपकारकभावमन्तरेत्यपेक्षाकारणमुद्घोषयति ।

**स्वभोगहेतोः प्रकृतिः पुमांसं**
**पुमान् स्वमुक्त्यै प्रकृतिं वृणोति ।**
**पङ्ग्वन्धवज्जायत एव योग-**
**स्तयोस्तदा तत्कृतसृष्टिरेषा ॥ ३५ ॥**

प्रकृतिः-प्रधानं स्वभोगहेतोः-निजभोगसिद्धेः पुमांसं-पुरुषं वृणोति अपेक्षते । भोग्यं-प्रधानं भोक्तारं विना न सम्भवतीति प्रधानस्य भोक्त्रपेक्षा युक्तैव ।

अत्रेदं वोध्यम्—

सुखाद्यनुभवो भोगः, न च सुखाद्यात्मकं प्रधानं स्वमनुभवितुमलं स्वात्मनि क्रियाविरोधादचेतनत्वाच्चातः स्वानुभवार्थं प्रधानस्य चेतनापेक्षोचितैव । उक्तञ्चैतत्-चिति पुरुषेऽवसानं पर्यवसानं-निष्ठा यस्य स चिदवसानो भोग इत्यर्थके—

"चिदवसानो भोगः" इति सूत्रे ( अ० १ सू० १०४ )

पुरुषस्यापेक्षां वोधयति "पुमान् स्वमुक्त्यै" इति । पुमान्-पुरुषः स्वमुक्त्यै-निजकैवल्यलाभाय प्रकृतिं-प्रधानं वृणोति अपेक्षते । प्रधाना-

दात्मनो विविक्ततामबुध्यमानः पुरुषस्तद्गतं दुःखत्रयं स्वात्मन्यभिमन्यमानः सत्त्वपुरुषान्यताख्यातिनिबन्धनं-प्रधानावधिकपुरुषान्यताप्रकारकज्ञाननिदान-मर्थाज्जडायाः परिणामिन्याः प्रकृतेः सकाशाद्भिन्नोऽहं चेतनोऽपरिणामी त्याकारकज्ञानमेव निदानं मुख्यं कारणं यस्यैवंविधं कैवल्यं प्रार्थयते। सत्त्वपुरुषान्यताख्यात्यात्मकं कैवल्यञ्च बुद्धिरूपेण परिणतप्रधानस्यैव परिणामो विवेकज्ञानमिति प्रधानमन्तरा न सम्पद्यते इति स्वमुक्त्यर्थं पुरुषः प्रकृतिमपेक्षते ।

ननु यदि भोगाय संयुक्तः पुरुषस्तर्हि किमिति कैवल्याय पुनः संयुज्यत इति चेच्छ्रूयताम्, संयोगपरम्पराया अविच्छिन्नत्वाद् भोगाय संयुक्तोऽपि कैवल्यलाभाय पुनः संयुज्यत इति भावः। प्रधानं स्वदर्शनार्थं-सुखाद्या-त्मकस्वस्वरूपानुभवरूपभोगार्थं पुरुषमपेक्षते, पुरुषश्च स्वकैवल्यार्थं-कैवल्य-कारणविवेकज्ञानरूपप्रकृतिपरिणामार्थं प्रकृतिमपेक्षते, तत्रोदाहरणमुपस्थापयति "पङ्ग्वन्धवत्" इति । यथा गतिशक्तिविहीनः पङ्गुः स्वाभीष्टदेशप्राप्त्यर्थं गतिमन्तमन्धमपेक्षते, दर्शनशक्तिविहीनोऽन्धश्च मार्गदर्शनार्थं दर्शन-शक्तिमन्तं पङ्गुमपेक्षते तद्वत् ।

अयमभिप्रायोऽत्र पङ्गूपमो निष्क्रियः पुरुषः, अन्धोपमञ्चाचेतनं प्रधानमिति ध्येयम् । यथाऽन्धस्कन्धाधिरूढेन पङ्गुनाऽन्धः पथि प्रवर्त्यते तथा प्रकृतिस्कन्धाधिरूढेन पुरुषेण प्रधानं सर्गे प्रवर्त्यते, यथा चान्धेन पङ्गुः स्वाभीष्टस्थानं प्राप्यते तथा प्रधानेन पुरुषः कैवल्यं प्राप्यत इति भावः ।

ननु प्रकृतिपुरुषयोः संयोगः स्वीक्रियतां महदादिसर्गस्तु कुत इत्यत उक्तम्—"तत्कृतसृष्टिरेषा" इति । तत्कृता द्रष्टृदृश्यसंयोगकृता सृष्टिः-सर्गः, भोगापवर्गद्वारभूतो महदादिसंसारः । तदुक्तम् "द्रष्टृदृश्ययोः संयोगो हेयहेतुः" इति (यो० पा० २ सू० १७) हेयहेतुः संसारकारणमिति भावः।

अत्रेदमवधेयम्—

महदादिसर्गं विना संयोगो भोगाय (सुखाद्यनुभवाय) कैवल्याय च नालमिति संयोग एव भोगापवर्गसिद्धये सृष्टिं करोति महदादीनामिति तत्त्वम् ।

सरलार्थः—प्रकृतिः स्वभोगसम्पन्नतायै चेतनमपेक्षते चेतनश्च स्वकैवल्य-लाभाय प्रकृतिमपेक्षते । भोगापवर्गसंसिद्धये पङ्ग्वन्धवदनयोः संयोगः संयोगादेव च महदादीनां विकारजातानां संसाराणां सृष्टिः परिगीयत इति भावः ॥ ३५ ॥

सृष्टिक्रमारम्भं सूचयति साम्प्रतम्—

बुद्धिः प्रधानात्करणं ततोऽह-
महङ्कृतेः षोडशकः समूहः ।
तन्मात्रतोऽस्मात्खलु पञ्चकात्तु
भवन्ति भूतानि ततश्च पञ्च ॥ ३६ ॥

प्रधानात्—प्रकृतेः, बुद्धिः-महतत्त्वं, बुद्धेरहङ्करणम्-अहंकारोऽहङ्कारात् पञ्चतन्मात्राण्येकादशेन्द्रियाणि च (मिलित्वा षोडशकः समूहोऽयम्) इति षोडशकः समूहो-गण, इति यावत्, ततः षोडशान्तर्गतादस्मात् पञ्चतन्मात्रतत्त्वतः खलु-निश्चयेन पञ्चभूतानि गगनादीनि जायन्ते । अत्र "एकद्वित्रिचतुष्पञ्चलक्षणाः शब्दादयः" इतियोगभाष्यात्-सूक्ष्माकाशाख्य-शब्दतन्मात्रं शब्दमात्रधर्मकं, सूक्ष्मवाय्वाख्यस्पर्शतन्मात्रञ्च शब्दस्पर्शमात्र-धर्मकं सूक्ष्मतेजोऽभिधेयरूपतन्मात्रञ्च शब्दस्पर्शरूपमात्रधर्मकं, सूक्ष्मजला-ख्यरसतन्मात्रञ्च शब्दस्पर्शरूपरसमात्रधर्मकं, सूक्ष्मपृथिव्याख्यगन्धतन्मात्रं च शब्दस्पर्शरूपरसगन्धमात्रधर्मकं ध्येयम् । तथा च शब्दतन्मात्राच्छब्द-गुणकात्सूक्ष्माकाशाच्छब्दगुणकं स्थूलमाकाशमुत्पद्यते । शब्दतन्मात्र-

सहितात्स्पर्शतन्मात्राच्छब्दस्पर्शगुणकात् सूक्ष्मवायोः शब्दस्पर्शगुणकः स्थूलो वायुर्जायते। शब्दस्पर्शतन्मात्रसहिताद् रूपतन्मात्राच्छब्दस्पर्शरूपगुणकात्सूक्ष्मतेजसः शब्दस्पर्शरूपगुणकं तेजो जन्यते। शब्दस्पर्शरूपतन्मात्रसहिताद्रसतन्मात्राच्छब्दस्पर्शरूपगुणकात् सूक्ष्मजलाच्छब्दस्पर्शरूपरसगुणकं स्थूलं जलमुत्पद्यते। एवं शब्दस्पर्शरूपरसतन्मात्रसहिताद् गन्धतन्मात्राच्छब्दस्पर्शरूपरसगन्धगुणकात्सूक्ष्मपृथिवीतत्त्वतः शब्दस्पर्शरूपरसगन्धगुणा स्थूला पृथिवी जायते।

ननु पञ्चतन्मात्राण्यहंकारोपादानकानीति यत्सिद्धान्तितं तत्तुच्छं गुणपर्वसूत्रे (पा. २ सू. १९) योगभाष्ये पञ्चतन्मात्राणां महत्तत्वकार्य्यत्वस्योक्तत्वादिति चेन्न महत्तत्त्वावेशेनैवाहंकारस्य कार्य्योत्पादक्षमत्वान्महत्तत्त्वमेवाहङ्कारद्वारा तन्मात्रकारणं न तु साक्षादेव महत्तत्वं तन्मात्रकारणमित्यभिप्रायकत्वेनादोषात्। "सूक्ष्मविषयत्वञ्चालिङ्गपर्यवसानम्" (पा. १ सू. ४५) इति सूत्रे स्वयमेव योगभाष्यकारैः तन्मात्राणामहङ्कारकार्य्यत्वाभिधानात्। "अक्षरान्महन् महतो वै अहङ्कारस्तस्मादेवाहङ्कारात्पञ्चतन्मात्राणि" (गो. ता. उ. ५३) "प्रकृतेर्महान् महतोऽहङ्कारोऽहङ्कारात्पञ्चतन्मात्राणि" (अ. १ सू. ६१) इति श्रुतिसूत्रयोः स्पष्टमहङ्कारकारणकत्वस्य तन्मात्राणामाम्नानाच्चेति।

सरलार्थः—प्रकृतेर्बुद्धिर्बुद्धेरहङ्कारोऽहङ्कारात्पञ्चतन्मात्राणि एकादशेन्द्रियाणि च पञ्चतन्मात्रेभ्यः पञ्चभूतानि गगनादीनि जायन्ते॥ ३६॥

"व्यक्ताद्विभिन्नं भवति प्रधानम्" इत्यनेनाव्यक्तं सामान्यतो लक्षितं "लघुस्वभावोऽर्थविभासकारी" इत्यादिना विशेषतश्चाव्यक्तं लक्षितं, व्यक्तमपि सामान्यतो लक्षितं "सकारणं व्यक्तमनित्यरूपम्", इत्यादिना साम्प्रतं विवेकज्ञानोपयोगितया व्यक्तिविशेषबुद्धितत्त्वं लक्षयति—

तत्त्वं यत्कुरुते विनिश्चयमहो सा बुद्धिराख्यायते
बुद्धेरष्टविधा मते कपिलजे धर्माश्च संकीर्त्तिताः ।
धर्मज्ञानविरत्यनन्तविभवा धर्मा इमे सात्त्विका-
श्चत्वारः परिकीर्त्तिताश्च तमसा ग्रस्ता विरुद्धा इतः॥३७॥

यत्तत्त्वं विनिश्चयं निश्चयात्मकं व्यापारं कुरुते—विदधाति सा बुद्धिरा-ख्यायते—व्यवह्रियते सांख्यैरिति शेषः ।

अत्रेदमाकूतम्—

हानोपादानादिव्यवहारे कर्त्ताऽखिलो मानवः पूर्वमालोच्य ज्ञानेन्द्रिय-व्यापारैर्वस्तु गोचरीकृत्य भूयश्च मत्वा इदमेवं नैवं वेति मनसा गुणदोषौ विचार्य भूयः शक्तोऽहं खल्वेतन्निष्पादने इत्येवमभिमत्याहङ्कारव्यापारं गोचरीकृत्य कर्त्तव्यमिति अध्यवस्यति-निश्चिनोति एवमालोचनमननाभि-मानावधारणानन्तरं प्रवर्तते । ननु जडायां वुद्धौ निश्चयात्मको व्यापारो न संघटत इति चेन्न, चितिसान्निध्यात् तादृशस्य व्यापारस्य तत्रापि सुप्रतीयमानत्वात् ।

उक्तञ्च वाचस्पतिमिश्रेण सांख्यतत्त्वकौमुद्याम्—चितिसन्निधाना-दापन्नचैतन्याथा बुद्धेर्विनिश्चयोऽध्यवसायः स एव बुद्धेरसाधारणो व्यापार-स्तदभेदा बुद्धिरिति ।

अनया रीत्या बुद्धि परिलक्ष्य विवेकज्ञानोपयोगिनो बुद्धिधर्मान् सात्त्विक-तामसान् निरूपयति—"बुद्धेरष्टविधा मते कपिलजे धर्माश्च संकीर्तिताः" इति ।

पूर्वोक्तलक्षणाया बुद्धेरष्टविधा-अष्टप्रकारा धर्माः कपिलजे मते-सांख्ये नये संकीर्तिताः-कथिताः । तत्र- चत्वारः सात्त्विकाश्चत्वारस्तामसाश्चेति । तत्र पूर्वं सात्त्विकं निरूपयति—"धर्मज्ञानविरत्यनन्तविभवाः" इति, इमे

धर्मज्ञानविरत्यनन्तविभवाः = धर्मज्ञानवैराग्यैश्वर्यात्मकाश्चत्वारः सात्त्विका धर्मा बोध्याः। तत्र धर्मोऽभ्युदयनिःश्रेयससाधकः। उक्तञ्च कणादेन— "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः" इति (अ.१ आ.१ सू.२)

तत्रापि यागाद्यनुष्ठानजनितो धर्मोऽभ्युदयसाधको, यमनियमाद्यष्टाङ्गयोगानुष्ठानजनितोऽशुक्लाकृष्णाख्यो धर्मविशेषश्च निःश्रेयससाधकः। गुणपुरुषान्यताख्यातिर्ज्ञानं, विरतिर्वैराग्यं रागाभावः। अनन्तविभवशब्दस्यैश्वर्यमर्थस्तच्चैश्वर्यं सात्त्विको बुद्धेर्धर्मो यतोऽणिमादीनामष्टानां प्रादुर्भावः। १–तत्राणिमा अणुभावो गुरुतरकलेवरोऽप्यणुर्भवति यतः शिलामपि प्रविशति। २–लघिमा–सूक्ष्मभावो लघुभाव इति यावत्, लाघवादेव दिवाकरकरानाधारीकृत्य दिवाकरलोकं प्रविशति। ३–महिमा–महतो भावः, तनुपरिमाणोऽपि नगनागनगरादिपरिमाणो महान् भवति। ४–प्राप्तिः–सर्वेषां भावानां सन्निधानम्, अत एव धरातलस्थोऽपि चन्द्रं स्पृशति। ५–प्राकाम्यम्–इच्छानभिघातः, इच्छानभिघातधर्मसम्पन्नस्य योगिनः स्वरूपं न काठिन्यादिभिर्भूम्यादिधर्मैरभिहन्यतेऽत एव जलमिव भूमिमुद्भिद्योत्तिष्ठति जले इव च भूमौ निमज्जति-प्रविशति। ६–वशित्वम्–भूतभौतिकं निखिलं वशीभवत्यवश्यम्। ७–ईशित्वम् भूतभौतिकानां प्रभवव्यूहव्ययानामीष्टे। प्रभवव्यूहव्ययानाम्–प्रभव उत्पादो व्यूहो यथावदवस्थापनं व्ययो नाशस्तेषामीष्टे तन्मात्रादिद्वारा भूतादीनामुत्पादादौ समर्थो भवतीत्यर्थः। ८–कामावसायित्वम्–सत्यसंकल्पता योगी यद् यदर्थतया संकल्पयति तत्तस्मै प्रयोजनाय कल्पते, विषमप्यमृतकार्य्ये संकल्प्य भोजयन् जीवयतीत्यर्थः।

अत्रायमभिसन्धिः—अयोगिनां साधारणमानवानां निश्चयाः-ज्ञानानि निश्चेतव्यं–ज्ञेयम् पदार्थमनुविधीयन्ते अनुसृतानि भवन्ति यादृशं ज्ञेयं तादृगेव ज्ञानम्, तादृगेव तेन कार्य्यमिति यावत्। योगिनां तु निश्चेतव्याः ज्ञेयाः पदार्था निश्चयमनुविधीयन्ते—ज्ञानानुसारिणो भवन्ति, यथा ज्ञातुं कर्त्तुं वेच्छन्तिते तथैव ज्ञेयं भवतीत्यभिप्रायः।

धर्मादिविरुद्धा बुद्धिधर्मा अधर्माज्ञानावैराग्यानैश्वर्यसंज्ञकाश्चत्वारस्तामसा ज्ञेया ।

तत्राधर्मो ब्रह्मवधादिजन्यो नरकादिक्लेशहेतुः, अज्ञानञ्चानित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरूपविपर्ययज्ञानम्, अवैराग्यञ्च विषयभोगतृष्णाः, अनैश्वर्यञ्च प्रतिहतेच्छत्वमित्यर्थः ।

सरलार्थः—सांख्यनये निश्चयव्यापारवती बुद्धिस्तस्याश्चत्वारः सात्त्विका धर्मा धर्मज्ञानवैराग्यैश्वर्यसंज्ञकास्तद्विपरीताश्चत्वारश्च तामसा अधर्माज्ञानावैराग्यानैश्वर्यसंज्ञकाः स्वीकृताः सन्ति ॥ ३७ ॥

साम्प्रतमहङ्कारस्य स्वरूपं प्रदर्शयति—

**अहङ्कृते रूपमथाऽस्ति गर्वः**
**सृष्टिप्रपञ्चो भवति द्विधेतः ।**
**समूह एकादशकस्तथाहि**
**तन्मात्रमन्यन्ननु पञ्चकञ्च ॥ ३८ ॥**

अहंकृतेरहंकारस्य रूपं स्वरूपं गर्वोऽभिमानोऽस्ति, गृहीते विचारिते च विषयेऽहमेवाधिकृतोऽहमेव समर्थो, गृहीतो विचारितश्च विषयो ममैव मदन्यः कश्चिदधिकृतो नातोऽहमेवाधिकृत इत्याकारको योऽभिमानः सोऽसाधारणव्यापारोऽहंकारः । असाधारणव्यापार इति व्यापारव्यापारिणोरभेदविवक्षयाऽसाधारणो व्यापारो यस्येति बहुव्रीहिसमासेन वा स्वार्थप्रतिपादने समर्थः । अहंकारमाश्रित्य बुद्धिर्निश्चिनोति अध्यवस्यति—कर्त्तव्यमेतन्मयेति । विज्ञविज्ञानभिन्नवस्तु अहमिति प्रत्ययः क्रियतेऽनेनेत्यहङ्कारः, अहंकरोतीत्यहंकारो वा कुम्भकारवदिति प्राहुः ।

इतोऽस्मादहङ्काराद् द्विधा द्विप्रकारकः सृष्टिप्रपञ्चः—सृष्टिविलासो भवति—

जायते तथाहि—एकादशकः समूहः-एकादशेन्द्रियाण्यन्यत्पञ्चकं तन्मात्रञ्च अर्थादहङ्कारादेकादशेन्द्रियाणि पञ्च तन्मात्राणि च जायन्त इति भावः ।

सरलार्थः—अभिमान एवासाधारणव्यापारोऽहंकारस्येत्यभिमानं एव तस्य स्वरूपम्, अहंकाराच्च सृष्टिद्वयी जायते । एकादशेन्द्रियाणामेका, अपरा च पञ्चतन्मात्राणां, नान्या सृष्टिः काचनेति भावः ॥ ३८ ॥

नन्वहंकारादेकरूपात्कथं जडप्रकाशकयोर्विलक्षणयोः सर्गद्वयमित्याकाङ्क्षायामुच्यते—

एकादशेन्द्रियगणो जनितस्त्वहंतः
सत्त्वात्मकादिति स सात्त्विकरूप उक्तः
तन्मात्रपञ्चकगणोऽस्ति तमःप्रधाना-
त्तत्त्वादहंत इति तामस उच्यते सः ॥ ३९ ॥

एकादशेन्द्रियगणः सत्त्वात्मकादहंतः—सात्त्विकाहंकारतो जनित उत्पन्न इत्यस्मात् कारणात्स सात्त्विकरूपः—सात्त्विकस्वरूपः, उक्तः कथितः, तन्मात्रपञ्चकगणश्च तमःप्रधानात्तत्त्वादहंतः—तामसाहंकाराज्जनित इति हेतोः स तामस उच्यते—कथ्यते ।

इदमत्रावधेयम्—

यद्यप्येकोऽहंकारस्तथाऽपि गुणभेदोद्भवाभिभवाभ्यां भिन्नं कार्यं सम्पादयति ।

सरलार्थः—सत्त्वगुणस्य प्रकाशकत्वाल्लघुत्वाच्चैकादशेन्द्रियगणः सात्त्विकः सात्त्विकादहंकारादुत्पद्यते । तामसादहंकारात्तु तन्मात्रगण उत्पद्यतेऽतः स तामस इति । अनया रीत्याऽहङ्काराज्जडप्रकाशकौ विलक्षणौ गणौ भवत इति भावः ॥ ३९ ॥

सत्त्वतमोभ्यामेव यदि सर्वं कार्यमुत्पद्यते तदा रजोगुणेन किं कृत-मित्यत उक्तम्—

कार्यं पृथङ् नैव रजःस्वरूपः
करोत्यहंकार इति प्रसिद्धम् ।
अस्माद् द्वयं जायत एव तत्त्वा-
दहंकृतेस्तत्त्रिविधं स्वरूपम् ॥ ४० ॥

रजःस्वरूपोऽहंकारो राजसोऽहंकारः पृथक्कार्य्यं भिन्नं कार्य्यं न करोति—सम्पादयतीति सांख्ये प्रसिद्धम्—प्रख्यातम् । अहंकृतेरहंकारादस्मा-त्तत्त्वाद्राजसादपि पूर्वोक्तं द्वयमेवार्थादेकादशेन्द्रियगणः सात्त्विकः पञ्च-तन्मात्रगणस्तामसश्चेति गणद्वयमेव जायते । तत्त्रिविधं स्वरूपमहंकृते-र्हंकारस्य बोध्यम् ।

अत्रेदमाकूतम्—

यद्यपि रजोगुणस्यान्यत्कार्य्यं नास्ति तथापि यतः सत्त्वतमसी स्वय-मक्रियेऽतः समर्थे अपि न स्वकार्य्यमुत्पादयितुमलं रजस्तु चलतया सत्त्वतमसी चालयति तदा ते स्वकार्य्यमुत्पादयतस्तस्मादुभयस्मिन् इन्द्रियतन्मात्ररूपे कार्य्ये सत्त्वतमसोः क्रियोत्पादद्वारेणास्ति रजोगुणस्य कारणत्वमिति न रजसो वैयर्थ्यमिति भावः ।

"वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा ।
अहंतत्त्वाद्विकुर्वाणान्मनो वैकारिकादभूत् ॥
वैकारिकाश्च ये देवा अर्थाभिव्यञ्जनं यतः ।
तैजसादिन्द्रियाण्येव ज्ञानकर्ममयानि च ॥
तामसो भूतसूक्ष्मादिर्यतः खं लिङ्गमात्मनः ।

इत्यादिपुराणवाक्येषु "सात्त्विकादहङ्कारादिन्द्रियाधिष्ठातारो देवा मनश्च जातं राजसाद् दशेन्द्रियाणि जातानि तामसाच्च तन्मात्राणीति प्रक्रियादर्शनेनाऽत्रापि "सात्त्विकरूप एकादशेन्द्रियगणः" इत्यनेन मनो ग्राह्यम्, "अस्माद्द्वयम्" इत्यनेन द्विविधमिन्द्रियं ज्ञानकर्मोभयं ग्राह्यमिति न व्याख्येयम्, एकादशेन्द्रियगणपदस्य मनोमात्रप्रत्यायनेऽशक्तत्वात् । सात्त्विकादहंकारात् कथमप्रकाशशीलानि कर्मेन्द्रियाणि इति चेदप्रकाशशीला-द्राजसादहङ्कारात्कथं ज्ञानेन्द्रियाणि प्रकाशशीलानीत्यपि विभाव्यतामिति ।

तथा चोक्तम्—

यश्चोभयोः समो दोषः परिहारोऽपि वा समः ।
नैकः पर्य्यनुयोक्तव्यस्तादृगर्थविचारणे ॥ इति ॥

सर्वस्य त्रिगुणत्वादुत्कटसत्त्वप्रधानादहंकाराद् मनो जायते, मध्यम-सत्त्वप्रधानाच्च ज्ञानेन्द्रियाणि, अधमसत्त्वयुक्ताच्चाहङ्कारात्कर्मेन्द्रियाणीति तु विचारशीला विचारयन्तीति पूर्वोक्तदोषस्य निरासो बोध्यः ।

सरलार्थः—राजसस्याहंकारस्य यद्यपि पृथक् कार्य्यं नास्ति तथाऽपी-न्द्रियतन्मात्रोभयस्मिन्नपि कार्य्ये कारणभूतयोः सत्त्वतमसोः क्रियोत्पादनद्वारेण तस्य कारणत्वं सुस्थिरमेवेति भावः ॥ ४० ॥

सात्त्विकं मनोरूपमिन्द्रियमाख्यातुं प्रथमं तावद् बाह्येन्द्रियदशकं बोधयितुमुच्यते—

ज्ञानेन्द्रियाणि नयनं श्रवणं रसज्ञा
त्वङ्नासिकेति भुवने कथितानि पञ्च ।
कर्मेन्द्रियाणि वचनञ्चरणञ्च पञ्च
पायुं तथा करमुपस्थमुशन्ति सन्तः ॥४१॥

भुवने—सांख्यादौ दर्शने नयनं-नेत्रं, श्रवणं—श्रोत्रं, रसज्ञा—जिह्वा, त्वक्–स्पर्शनं, नासिका–नासेति पञ्चज्ञानेन्द्रियाणि कथितानि–स्वीकृतानि तथा वचनं-वाचं, चरणं-पादं, पायुं–गुदं, करं हस्तमुपस्थं–जननेन्द्रियञ्च पञ्च कर्मेन्द्रियाण्युशन्ति-कथयन्ति, सन्तः—मनीषिणः।

सात्त्विकाहंकारोपादानकत्वमिन्द्रियत्वम्। ज्ञानकर्मेन्द्रियभेदादिन्द्रियं द्विविधम्। एतदुभयमपीन्द्रस्यात्मनो ज्ञापकत्वादिन्द्रियमुच्यते।

अत्रेदमवधेयम्—

"स एतमेव पुरुषं ब्रह्म ततमपश्यदिदमदर्शमिती ३ं तस्मादिदन्द्रो नाम इदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण" इति श्रुतेः, इन्द्र आत्मा तस्य लिङ्गं ज्ञापकमित्यर्थे "इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्र-सृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति च" इति सूत्रेण 'इन्द्रियमिति साधु। उपर्युक्ताया ऐतरेयश्रुतेरर्थस्तु सः पूर्वोक्त आत्मा एतमेव मूर्द्धद्वारा प्रविष्टं पुरि शयानमात्मानं ब्रह्म ततमं विस्तृतरूपमपश्यदात्मानमेव ब्रह्मरूपेण साक्षात्कृतवानिति यावत् ततस्तुष्टः सन्नाह—"इदमदर्शम् अपरोक्षतयाऽहमदर्शं दृष्टवानस्मि ई ३ इति प्लुतिस्तुष्ट्यर्था, तस्मादपरोक्षदर्शनादिदन्द्रो नाम, इदम्पद-पूर्वकाद् दृशेर्ड्रट्प्रत्यय इदं दृष्टवानित्यर्थे इदन्द्र इति, ह वै प्रसिद्धं नामैत—दिदन्द्र इति, ननु "इन्द्रोमायाभिः पुरुरूप ईयते" इत्यादाविन्द्र इतिनाम प्रसिद्धं न नत्विदन्द्र इति तत्राह—"तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते" परोक्षेण पूजार्थं यतः "परोक्षप्रिया देवाः" इति।

सरलार्थः—चक्षुःश्रोत्रघ्राणरसनस्पर्शनानि ज्ञानेन्द्रियाणि वाक्पाणि-पादपायूपस्थसंज्ञकानि च कर्मेन्द्रियाणीति वाह्येन्द्रियाणि दश स्वीकृतानि सुप्रसिद्धानि च भुवन इति भावः ॥ ४१ ॥

साम्प्रतमान्तरेन्द्रियस्य सात्त्विकस्य मनसो लक्षणं निरूपयति—

**संकल्पकं मानसमिन्द्रियत्वं**
**द्वयात्मकं याति समानधर्मात्।**

नानात्वमस्याऽस्ति विशेषहेतो
यथा विभिन्नाः खलु बाह्यभेदाः ॥ ४२ ॥

एकादशेन्द्रियाणां मध्ये मनो ज्ञानेन्द्रियं कर्मेन्द्रियञ्चेत्युभयात्मकम् । "अन्यत्र मना अभूवं नादर्शम्" इत्यादिश्रुतेर्मनोव्यापारं विना इन्द्रियाणां स्वस्वव्यापारेऽक्षमत्वादुभयविधव्यापारवत्त्वेन मनस उभयेन्द्रियरूपत्व-मितिभावः ।

नन्विन्द्रियजन्यज्ञानस्य सहकारित्वमात्रेण मनस इन्द्रियत्वे आलोक-स्यापीन्द्रियत्वं कुतो नेति चेन्न, सात्त्विकाहङ्कारकार्यत्वे सति ज्ञानकर्मोभय-करणत्वेन मनस उभयेन्द्रियत्वमित्यर्थस्यात्र विवक्षितयाऽदोषात् ।

सम्प्रति असाधारणेन व्यापारेण मनो लक्षयति "संकल्पकं मानसमिन्द्रि-यत्वम्" इति चक्षुरादेर्व्यापारेण गोचरीकृतं घटादिवस्तु इदमिदं किञ्चिद्वस्तु इत्येवं सम्मुग्धम् अनुवृत्तव्यावृत्तरूपेणाविभक्तमेव भासते ( अनुवृत्तरूपं घट-त्वादिकं सामान्यं व्यावृत्तरूपञ्च घटादिविशेषात्मकं विभक्तं न भाति ) भूयश्चेदमेवमेतादृग्रूपेण ( घटत्वादिरूपेण ) युक्तमिदं—नैवम्—एता-दृग्रूपेण ( पटत्वादिरूपेण ) च नेदं युक्तमित्येवं सम्यक् कल्पयति—विशे-षणविशेष्यभावेन अनुवृत्तव्यावृत्तरूपेण विविच्य प्रत्येति मनोऽतः संकल्पक-मिति कथ्यते ।

प्रथमं निर्विकल्पकं ज्ञानमालोचनात्मकं जन्यते पश्चाच्च सविकल्पकं मनसा । यदाहुः पूर्वाचार्य्याः—

सम्मुग्धं वस्तुमात्रं हि प्राग्गृह्णन्त्यविकल्पितम् ।
तत्सामान्यविशेषाभ्यां कल्पयन्ति मनिषिणः ॥ इति

अयमभिप्रायः—

मनोव्यापारात्पुरा चक्षुःसन्निपातानन्तरमविकल्पितं—सामान्यविशेषरूपेणानाकलितमत एव सम्मुग्धम्—अविविक्तम्, अत एव च वस्तुमात्रं गृह्णन्ति प्रतिपत्तारः। पुनश्च मनीषिणो मनोव्यापारवन्तः सन्तः सामान्यविशेषाभ्यामनुवृत्तव्यावृत्तरूपाभ्यां तद्वस्तु कल्पयन्ति—विविच्यावगच्छन्तीति भावः।

**एवं कौमारिलश्लोकवार्तिकेऽप्यङ्गीकृतम्—**

**अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम्।**
**बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम्॥**

प्रथमं सविकल्पकज्ञानात्प्राग्यद् वस्तुमात्रगोचरं बालमूकादिविज्ञानसमानं निर्विकल्पकं ज्ञानमस्ति तत्प्रतीतिसिद्धमालोचनाख्यं ज्ञानमभ्युपेयं, निर्विकल्पकज्ञानाभावे सविकल्पकज्ञानानुत्पत्तेः।

तथा चाहुर्न्यायकन्दलीकाराः—

"यदि हि वस्तुस्वरूपस्य निर्विकल्पकेन ग्रहणं नेष्यते तदा तद्वाचकशब्दस्य स्मृत्यभावात् सविकल्पकमपि न स्यादिति"।

प्रशस्तपादभाष्येऽपि तदेव प्रदिपादितम्—

"सामान्यविशेषेषु स्वरूपालोचनमात्रं प्रत्यक्षम्" इति पूर्वोक्तकौमारिलश्लोकस्थशुद्धवस्तुजमित्यनेन न सामान्यगोचरमालोचनमित्युक्तमपि तु सामान्यविशेषकल्पनाहीनं तज्ज्ञानमित्यावेदितम् "न विशेषो न सामान्यं तदानीमनुभूयते। तयोराधारभूता तु व्यक्तिरेवावसीयते" इत्युत्तरवार्तिके तथैवाभिधानात्।

न्यायरत्नाकरकारेणैतस्याभिप्राय एवमुपन्यस्तः—

विशेषो व्यवच्छेदो-व्यावृत्तिः, सामान्यं-समानत्वमनुवृत्तिरिति यावत्, अनुवृत्तिव्यावृत्ती न निर्विकल्पके प्रकाशेते, तयोस्त्वाधारभूतमनुवृत्तं

व्यावृत्ताञ्च यज्जातिव्यक्त्याद्यनेकाकारं वस्तु तत्तदाकारयुक्तं सम्मुग्धं सर्वमवसीयते तच्छुद्धवस्त्वित्युच्यते, व्यक्तिरिति वस्त्वित्यर्थ इति ।

नन्वालोचनज्ञानमविविक्तगोचरं यदि केन तर्हि विविच्य ग्रहण-मित्यालोच्यते चेत्कौमारिलश्लोकवार्तिकस्थवाक्यमेव प्रमाणत्वेन गृह्यताम्—

"ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया ।
बुद्ध्याऽवसीयते सापि प्रत्यक्षत्वेन संमता" ॥ इति।

ततः परं-निर्विकल्पकज्ञानानन्तरं यया बुद्धया नीलत्वघटत्वादिभिर्धर्मै-र्विविच्य गृह्यते वस्तु सापि बुद्धिः प्रत्यक्षैवेति बोध्यम् ।

यत्प्राक् केवलेनेन्द्रियेण निर्विकल्पकं ज्ञानं जनितं तदेव न प्रत्यक्षमपि तु यच्चान्तरमिन्द्रियसहायेन मनसा सविकल्पकं ज्ञानं जनितं तदपि प्रत्यक्षमिति भावः ।

ननु बाह्येन्द्रियतन्त्रं हि मनो बाह्यं गोचरयति चक्षुरादिबहिरिन्द्रिय-नैरपेक्ष्येणैव मनसो बहिर्वृत्तिस्वीकारे सति अन्धादयोऽपि रूपादीनालोचये-युरिति अन्धबधिराद्यभाव एव प्रसज्येत तथा च नेन्द्रियेणालोचितो विशेषस्तर्हि मनसाऽपि स कथमनुव्यवसीयेत ? एवञ्चानुव्यवसायस्य विशिष्ट-विषयत्वीय सामान्यविशेषविषयमिन्द्रियमिति स्वीकरणीयम् । तथा चाहुर्यो-गभाष्यकाराः

"न च तत्सामान्यमात्रग्रहणाकारं कथमनालोचितः स विषयविशेष इन्द्रियेण मनसाऽनुव्यसीयेत" इति ।

नात्र "आलोचनं ज्ञानं सामान्यमेव गोचरयति मनस्तु विशिष्टमनु-व्यवस्यति" इत्यभिप्रेतमपि त्विन्द्रियजमालोचनमविविक्तौ सामान्यविशेषौ गोचरयति मनस्तु विविक्तौ तौ गृह्णाति इति—"निर्विकल्पकबोधेऽपि द्वयात्मकस्यापि वस्तुनः । ग्रहणं लक्षणाख्येयं ज्ञात्रा शुद्धन्तु गृह्यते" इत्यादि-वार्तिकेन तथैवाभिधानात्, तत्कथमनुव्यवसायानुपपत्तिः कथञ्च योगभाष्य-विरोध इति ।

द्व्यात्मकस्य,—सामान्यविशेषात्मकस्येत्यर्थः। सामान्यावभासोऽपि प्रतीतिसिद्ध एव नहि निर्विकल्पकेनाऽगृहीतस्य सविकल्पकेनाऽपि ग्रहणं संभवति, न वाऽगृहीते सामान्ये व्यक्त्यन्तरे प्रत्यभिज्ञानं सम्भवति, तस्मात्सामान्यं विशेषश्च निर्विकल्पकेऽपि प्रकाशत एव। ननु "न विशेषो न सामान्यं तदानीमनुभूयते" इत्युक्तं कथं तयोर्ग्रहणमुच्यते, अत आह—"लक्षणाख्येयम्" इति, नहीदानीमप्यनुवृत्तिव्यावृत्त्योर्ग्रहणमुच्यते या त्वियं गृह्यमाणस्य द्व्यात्मकत्वाख्या सा लक्षणाख्या गृह्यमाणस्य वस्तुनो लक्षणमाख्यायते-सामान्यविशेषात्मकं तद्वस्त्विति, ज्ञात्रा पुनः शुद्धमेवानुवृत्तिव्यावृत्तिरहितं गृह्यते, न त्वसाधारणत्वेन परेभ्यो व्यक्त्यन्तरेभ्यो व्यावृत्तेरकल्पनात्, तथा व्यक्त्यन्तरानुवृत्तेरकल्पनान्न सामान्यमपि गृह्यते अतो न विरोध इत्येतदर्थ इति पार्थसारथिमिश्राः। अनेन चालोचनस्याविविक्तविषयत्वमुक्तम् उत्तरज्ञानस्य च विविक्तविषयत्वं "ततः परं पुनर्वस्तु" इत्यनेनाऽभिहितम्। कन्दल्यामपि व्यक्तमेतद्—

तच्च (निर्विकल्पकज्ञानञ्च) न सामान्यमात्रं, गृह्णाति भेदस्यापि प्रतिभासनान्नापि स्वलक्षणमात्रं (व्यक्तिमात्रं विशेषः) सामान्याकारस्यापि संवेदनाद् व्यक्त्यन्तरदर्शने प्रतिसन्धानाच्च, किन्तु सामान्यं विशेषञ्चोभयमपि गृह्णाति, परमिदं सामान्यमयं विशेष इति विविच्य न प्रत्येति वस्त्वन्तरानुसन्धानविरहात्" इत्यादिना।

तथा च यद्विज्ञानभिक्षुणा अ. २ सू. ३२ साङ्ख्यप्रवचनभाष्ये "कश्चित्तु निर्विकल्पकं ज्ञानमेवालोचनमिन्द्रियजन्यं च भवति, सविकल्पकन्तु मनोमात्रजन्यमिति आह—तन्न योगभाष्ये व्यासदेवैर्विशिष्टज्ञानस्याप्यैन्द्रियकत्वस्य व्यवस्थापितत्वात्" मनसः संकल्पलक्षणो व्यापारः समानजातीयाद् बुद्ध्यादेः (सर्वविषयत्वेन सजातीयाद् बुद्धितत्त्वादभिमानतत्वाच्च) असमानजातीयाच्च चक्षुरादेः (प्रतिनियतविषयत्वेनासमानजातीयचक्षुरादिकात्) सकाशाद् मनो व्यावर्तयन् मनो लक्षयति-व्यावृत्त-

रूपेण प्रत्याययतीति सङ्कल्पो मनसो लक्षणं सुसम्पन्नम् ।

यद्यपि नासाधारणव्यापारवत्त्वमिन्द्रियत्वव्याघातकम् असाधारण-व्यापारवत्त्वस्येन्द्रियत्वव्याघातकत्वे चक्षुरादीनामप्यनिन्द्रियत्वप्रसङ्गात् तथापि यद्यसाधारणव्यापारवतो मनस इन्द्रियत्वं तर्ह्यसाधारणव्यापारवतोर्महद-हङ्कारयोरपि कथन्नेन्द्रियत्वमथवा यथा प्रतिनियतविषयाणामेव नेत्रादीनामि-न्द्रियत्वं न सर्वविषयत्वेनानियतविषययोर्महदहंकारयोरिन्द्रियत्वम् तथा मन-सोऽपि सर्वविषयत्वेन नेन्द्रियत्वं भवितुमर्हतीत्याशङ्कायां निरासायोक्तम्—

"इन्द्रियत्वम्" इति, कुतः "समानधर्माद्" इति, इन्द्रियान्तरैः सह मनसः साधर्म्यं सात्त्विकाहंकारोपादानकत्वं ग्राह्यं न तु पूर्वोक्तमिन्द्रलिङ्ग-त्वरूपम्, बुद्ध्यहङ्कारयोरप्यात्मलिङ्गत्वेनेन्द्रियत्वप्रसक्तेः ।

कथं तर्हि प्रागात्मनश्चिह्नत्वादुभयमिन्द्रियम् ( द्व्यात्मकम् ) इत्युक्त-मिति चेच्छ्रूयतामिन्द्रलिङ्गत्वस्यातिप्रसक्तत्वाद् व्युत्पत्तिमात्रं-प्रकृति-प्रत्ययार्थान्वाख्यानमात्रमिदमिन्द्रलिङ्गत्वं यथा गच्छतीति गौरिति न तु प्रवृत्तिनिमित्तमिन्द्रियपदस्य चक्षुरादावेव प्रवृत्तेर्निमित्तस्य सुप्रसिद्धत्वाच्च । यथानतिप्रसक्तमेव सास्नादिमत्त्वं पशुविशेषे गोपदस्य प्रवृत्तेर्नि-मित्तमाश्रीयते न तु व्युत्पत्तिमात्रलभ्यं गमनकर्तृत्वमतिप्रसक्तत्वात् ( पुरुष-स्यापि गमनकर्तृत्वेन तत्रापि गोपदप्रवृत्त्यापत्तेः ) तथाऽनतिप्रसक्तं सात्त्विकाहंकारोपादानकत्वमेवात्रेन्द्रियपदस्य चक्षुरादौ प्रवृत्तिनिमित्तमा-श्रीयते नत्वतिप्रसक्तं व्युत्पत्तिमात्रलभ्यमिन्द्रलिङ्गत्वमेवं च न महदहङ्कार-योरिन्द्रियत्वप्रसङ्ग इति बोध्यम्। तथा च पाचकपदवन्न यौगिकमिन्द्रिपदमपि तु पङ्कजादिवद् योगरूढं, तेन सात्त्विकाहङ्कारोपादानकत्वे सतीन्द्रलिङ्गत्व-मिन्द्रियत्वमिति फलितमिति भावः ।

ननु कारणानां वैचित्र्यं विना कार्याणां वैचित्र्यस्यायोगादविलक्षणा-दहङ्कारात्कथं विलक्षणानीन्द्रियाणीति शङ्कायां उच्छेदायोक्तम्—

"नानात्वमस्यास्ति विशेषहेतोर्यथा विभिन्नाःखलु बाह्यभेदाः" अर्थाद्

धर्माधर्मरूपो यो गुणपरिणामविशेषोऽदृष्टस्तस्य वैचित्र्यादहंकारस्य तत्कार्याणाञ्चेन्द्रियाणां नानात्वमेनकत्वम्, अर्थाच्छब्दाद्युपभोगप्रवर्तकं यदहष्टरूपं सहकारि कारणं तद्भेदादितिभावः ।

पुरुषस्योपभोगार्थं हि गुणानां प्रवृत्तिरिति हि स्थितिः उपभोगश्च पुरुषस्य शब्दादिविषयानुभवरूपो न स्वाभाविकोऽपित्वदृष्टसहकारेणेन्द्रियाद्यु-पस्थापितशब्दादिद्वारा, न चैकेनेन्द्रियेण समस्तं शब्दादिकमुपस्थापयितुं शक्यमित्यगत्येन्द्रियनानात्वमुररीकार्यं, तथा च धर्माधर्मसहकृतगुणविमर्द-वैचित्र्यादहंकारवैचित्र्यात्परिणामवैचित्र्यमिति तत्त्वम् ।

अहङ्कारस्यानेकात्मकत्वाभ्युपगमेनानेन "यदि पुनरिन्द्रियाण्येककारणकानि स्युः कारणस्वभावानुविधानादैकात्म्याद्विषयव्यवस्था न स्यात्सर्वं वा सर्वार्थ-मेकं वा सर्वार्थमिति स्यात्" इत्युद्द्योतकराचार्य्योक्तो नानेन्द्रियाणा-मेकाहङ्कारकारणकत्वस्याक्षेपोऽपि परिहृतो वेदितव्यः ।

उक्तार्थस्य परिपुष्टये दृष्टान्तमुपस्थापयति "यथा विभिन्नाः खलु वाह्यभेदाः" यथा गुणपरिणामविशेषादृष्टरूपसहकारिकारणसहितात्ताभ-सादहंकाराद् बाह्यविषयाः शब्दतन्मात्रादिरूपा नाना जायन्ते तथा सात्त्विकाऽदहङ्कारादनेकविधानीन्द्रियाणीति तत्त्वम् ।

सरलार्थः—संकल्पव्यापारकं मनः सात्त्विकाहंकारोपादानकत्वरूपे-न्द्रियत्वविशिष्टं स्वस्वव्यापारे कर्मेन्द्रियाणां प्रवर्तकत्वात् कर्मेन्द्रियं, ज्ञानेन्द्रियाणां प्रवर्तकत्वाच्च ज्ञानेन्द्रियमित्युभयात्मकं ज्ञेयं गुणपरिणामविशेषादृष्ट-रूपसहकारिकारणमहिम्ना च वाह्यविषयभेदा इन्द्रियभेदाश्च वोध्याः ॥ ४२ ॥

साम्प्रतं ज्ञानेन्द्रियाणां कर्मेन्द्रियाणाञ्च वाह्यानामसाधारणान् व्यापारान्निरूपयति—

रूपादिपञ्चग्रहणे प्रवृत्ति-

ज्ञानेन्द्रियाणां भवतीह सांख्ये ।

स्वे स्वे तथास्ते विषये च वृत्तिः
कर्मेन्द्रियाणामपि देहगानाम् ॥ ४३ ॥

रूपादिविषयेषु सन्निहितेषु सत्सु यद्रूपादिविषयाकारपरिणामरूपमालोचनमात्रं ( मात्रशब्देन सामान्यविशेषविवेचनवैधुर्य्यं तस्य सूचयति ) तज्ज्ञानेन्द्रियाणां वृत्तिः व्यापारो धर्म इति यावत् । तदेवोक्तम्—

"रूपादिपञ्चग्रहणे प्रवृत्तिः" इति ।

सांख्ये—ज्ञानेन्द्रियाणां नयनश्रवणरसनस्पर्शनघ्राणानां रूपादिपञ्चग्रहणे प्रवृत्तिः—व्यापारोऽर्थाद् नयनस्य रूपं, श्रवणस्य शब्दो, रसनस्य रसः, स्पर्शनस्य स्पर्शः, घ्राणस्य गन्धोऽसाधारणव्यापारः । तथा तनैव प्रकारेण देहगानां शरीरस्थानां कर्मेन्द्रियाणामपि स्वे स्वे विषये वृत्तिः ।

अर्थाद् वागिन्द्रयस्य वचनं, हस्तयोरादानं—ग्रहणम्, पादयोर्विहरणं गमनम्, पायोरुत्सर्गो मलापनयो व्यापारो बोध्यः ।

आनन्दो मूत्रत्यागो रमणं सन्तानोत्पत्तिश्चोपस्थस्य वृत्तिरसाधारणव्यापारः ।

इतरेन्द्रियाणामधिष्ठानस्य नयनगोलकादेर्हस्तादेर्वा स्पष्टत्वात् तत्कथनमुपेक्ष्य वागिन्द्रयाधिष्ठानं सम्प्रति वक्तव्यमिति चेद् गृह्यताम्—

कण्ठताल्वादिस्थानमिन्द्रियं वागिति—

"अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलञ्च दन्ताश्च नासिकोष्ठौ च तालु च" ॥

इत्युक्तानि कण्ठताल्वादीनि स्थानानि यस्येन्द्रियस्य तत्कण्ठताल्वादिस्थानमिन्द्रियं वागित्यर्थः ।

सरलार्थः—शब्दस्पर्शरूपरसगन्धानां पञ्चानां विषयाणां ग्रहणे श्रोत्रस्पर्शननयनरसनघ्राणरूपाणां ज्ञानेन्द्रियाणां क्रमशः सामर्थ्यम् । तथा वचनादान-

विहरणमलापनयनमूत्रत्यागानां पञ्चानां विषयाणां संसिद्धौ वाक्पाणिपाद-पायूपस्थानां कर्मेन्द्रियाणां क्रमशः सामर्थ्यं बोध्यम् । अत्र मूत्रत्यागपदमुपलक्षणविधयाऽऽनन्दरमणसन्तत्युत्पत्तीत्याद्यर्थबोधकमिति ध्येयम् ॥ ४३ ॥

साम्प्रतमन्तःकरणत्रयस्यासाधारणान् धर्मान्निरूपयति—

बुद्धेः स्वरूपं ननु बुद्धिवृत्ति-
र्मनःस्वरूपं मनसश्च वृत्तिः ।
अहङ्कृते रूपमहङ्कृतेश्च
वृत्तिर्न साधारणता हि तासु ॥ ४४ ॥

ननु—निश्चयेन बुद्धेः स्वरूपं बुद्धिलक्षणमेव बुद्धेरन्तःकरणस्य वृत्ति-र्व्यापारः । मनसोऽन्तःकरणस्य च वृत्तिर्व्यापारो मनःस्वरूपं—मनसो लक्षणमेव, अहङ्कृतेरहङ्कारस्यान्तःकरणस्य च वृत्तिर्व्यापारोऽहङ्कृतेरहङ्कारस्य रूपं लक्षणमेव । एतेषां त्रयाणामन्तःकरणानां स्वस्वस्वरूपात्मकवृत्तिषु तासूपर्युक्तासु साधारणता नाऽपित्वसाधारणता विद्यते ।

सरलार्थः—बुद्धेर्निश्चयोऽहंकारस्याभिमानो मनसः संकल्पोऽसाधारणो व्यापारो बोध्यः ॥ ४४ ॥

समेषां करणानामसाधारणीं वृत्तिं निरूप्य संप्रति तेषां साधारणीं वृत्तिं निरूपयति—

सर्वेन्द्रियाणां परमास्ति वृत्तिः
प्राणादिपञ्चाख्यसमीररूपा ।
साधारणी संपरिकीर्तिता च
सांख्ये नये संशय एव नात्र ॥ ४५ ॥

सांख्ये नये-शास्त्रे सर्वेन्द्रियाणां-निखिलेन्द्रियाणां प्राणापानसमानोदान-व्यानाख्या समीररूपा-वायुरूपा परमा-उत्कृष्टा साधारणी वृत्तिः-साधारणो व्यापारः, संपरिकीर्तिता-कथिता। अत्र—साधारणवृतिनिष्ठोत्कृष्टत्वे संशयो नैव कार्यः साधारणवृत्तिं विनाऽसाधारणवृत्तेरसम्भवात्। यतो हि—यदा प्राणनक्रियादिरूपां प्राणादिसाधारणीं वृत्तिमन्तरा करणानां शरीराणाञ्च जीवनमेवासम्भवं तदाऽसाधारणवृत्तेः का कथा? साऽशक्यसम्पादेति साधारणवृत्तेरुत्कृष्टत्वं ज्ञेयम्।

अयमभिप्रायः—यथा पञ्जरचालनरूपो व्यापारः संहतानां कपोतानां साधारणो व्यापारस्तथा कलेवरधारणरूपो जीवनाख्यः प्राणनादिव्यापारो मिलितानामिन्द्रियाणां साधारणो व्यापारोऽर्थाद् यथा अनेके विहगाः सम्भूय व्यापारिणो भूत्वैकं पञ्जरं चालयन्ति तथा सम्भूय व्यापारवन्ति अनेकानि अन्तःकरणानि कलेवरमेकं धारयन्तीति भावः।

सरलार्थः—नासाग्रहृन्नाभिपादाङ्गुष्ठवृत्तिः प्राणनादन्नाशनादिना शरीर-धारणात् प्राणः, कृकाटिकापृष्ठपादपायूपस्थपार्श्ववृत्तिर्मलमूत्रादेरपनयनाद-पानः, हृन्नाभिसर्वसन्धिवृत्तिः समानमनुरूपं नाडीषु रसानां नयनात् समानः, हृत्कण्ठतालुमूर्धभ्रूमध्यवृत्ती रसाद्यूर्ध्वनयनादुदानः, त्वग्वृत्तिर्बलवत्कर्महेतु-त्वाच्च व्यानः, एवं रीत्या स्थानक्रियाभेदभिन्नाः पञ्चैते प्राणाः करणानां-साधारणव्यापारा बोध्याः ॥ ४५ ॥

चतुर्विधस्य करणस्यासाधारणव्यापारेषु क्रमाक्रमौ सप्रकारौ निरूपयति

**अक्ष्णस्तथान्तःकरणत्रयस्य**

**प्रत्यक्ष आस्ते विषये कदाचित्।**

**सहैव वृत्तिः क्रमशः कदाचि-**

**दियं प्रणाली किल सांख्यनीतौ ॥४६॥**

प्रत्यक्षे विषये-दृष्टे वस्तुनि-चक्षुरादिगोचरे पदार्थेऽक्ष्णश्चक्षुषस्तथाऽन्तः-करणत्रयस्य-मनोबुद्धयहंकाराख्यस्य मिलितस्य चतुष्टयस्यान्तःकरणस्य सहैव-युगपदेव वृत्तिर्व्यापार आस्ते भवति । यथा कश्चन निविडान्धकारे विद्युत्सम्पातमात्राद् व्याघ्रं सम्मुखं सन्निकटमवलोकयति तदा किल तस्य नयनमनोऽहङ्कारबुद्धीनां व्यापारा आलोचनसंकल्पाभिमानाध्यवसायाः सहैवाविर्भवन्ति ततो मण्डूकवदूर्ध्वप्लवनं विधाय तत्क्षणमेव स्थानान्तरं प्राप्नोति ।

अत्र वृत्तीनां यौगपद्याख्यानेन बाह्येन्द्रियवृत्तीनामपि युगपद्भवनस्यार्थात् कथितत्वाद् दीर्घशष्कुलीभक्षणादावक्रमेण जायमानं ज्ञानपञ्चकमप्यत्रोदाहर्त्तव्यम् ।

ननु नैकमणु मनो विभिन्नस्थानानीन्द्रियाणि युगपदधिष्ठातुं शक्तं मनोऽधिष्ठितानामेव च बाह्येन्द्रियाणां स्वस्वव्यापारे क्षमत्वस्य सुप्रसित्वादिति न युगपज्ज्ञानपञ्चकोत्पादः शक्यसम्पाद इति चेदत्रोच्यते-यथाऽऽशुसञ्चारात् संभ्रमतोऽलातस्य विद्यमानोऽपि क्रमो न गृह्यते तथा ज्ञानानामप्याशुसंचाराद् विद्यमानक्रमस्याग्रहणाद् दीर्घशष्कुलीभक्षणादौ युगपदुपलब्ध्यभिमान इत्यास्थेयम्, तथा चोक्तम्—

"अलातचक्रदर्शनवत्तदुपलब्धिराशुसञ्चारात्" इति। परमार्थतस्तु सांख्यमते मनसो मध्यमपरिमाणवत्त्वेन युगपदनेकेन्द्रियाधिष्ठातृत्वसम्भवाद् युगपज्ज्ञानपञ्चकोत्पादे न किञ्चिद् बाधकम् अननुभूयमानक्रमकल्पनाया अप्रामाणिकत्वात् । "ज्ञानायौगपद्यादेकं मनः" "यथोक्तहेतुत्वाच्चाणु" इति गोतमोदितः सिद्धान्तो न सांख्यसम्मत इति भावः ।

अक्रमेण वृत्त्युत्पादस्थलमुपस्थाप्य क्रमेण वृत्त्युत्पादस्थलमुपस्थापयति— "क्रमशः कदाचित्" यदा मन्दप्रकाशे कश्चन सचेता अस्पष्टमवलोकयति

वस्तु, ततस्तद्वा समाहितमनाः स संकल्पयति कर्णान्ताकृष्टसशरशिञ्जितमण्ड-लीकृतकोदण्डः प्रचण्डतरस्तस्करोऽयमिति, ततः मां प्रत्यागच्छतीत्यभिमन्यतेऽथास्मात् स्थानाद् गच्छामीति निश्चिनोति, अनया रीत्याऽवलोकनं संकल्पनमभिमननं निश्चयनञ्च चक्षुर्मनोऽहंकारबुद्धीनां करणानां चतुर्णां क्रमशो व्यापारा जायन्ते। किल-निश्चयेनेयं पूर्वोक्ता प्रणाली सांख्यनीतौ-सांख्यदर्शने सांख्याचार्य्यैरङ्गीकृता विद्यत इति शेषः। अक्षण इव ज्ञानेन्द्रियाणामन्येषामपि त्रिभिरन्तकरणैः सह युगपद् क्रमशश्च वृत्तिर्बोध्येति भावः।

सरलार्थः—मनोबुद्धयहंकारैरन्तःकरणैः सह नेत्रस्य प्रत्यक्षे विषये कदाचिद् युगपत् प्रवृत्तिर्भवति कदाचित्क्रमशो भवति, एवं श्रोत्रादीनामप्यन्तःकरणैः सहाक्रमशः क्रमशश्च वृत्तिर्ज्ञेया। इयं प्रणाली सांख्यदर्शने स्वीकृतेति भावः॥ ४६॥

इदानीमन्तःकरणत्रयस्य वृत्तिं निरूपयति—

दृष्टे यथा वृत्तिरहो परोक्षे
स्थले तथान्तःकरणत्रयस्य।
उक्ता परं निश्चितमेतदस्ति
प्रत्यक्षपूर्वैव विराजते सा॥ ४७॥

यथा-येन प्रकारेण दृष्टे-प्रत्यक्षेऽन्तःकरणत्रयस्य वृत्तिः क्रमशोऽक्रमशश्चोक्ता कथिता तथा परोक्षे स्थलेऽपि विराजते-शोभते क्रमशोऽक्रमशश्चोत्पद्यत इत्यर्थः। परं किन्त्वेतन्निश्चितं-निर्णीतमस्ति-वर्तते यत् साऽन्तःकरणत्रयस्य वृत्तिः प्रत्यक्षपूर्वैव-प्रत्यक्षपूर्विकैव विराजते-शोभते जायत इत्यर्थः।

अर्थादनुमेये वह्न्यादौ व्याप्तिज्ञानाय प्रत्यक्षापेक्षा स्वर्गापूर्वदेवतादौ शाब्दे शक्तिग्रहाय प्रत्यक्षापेक्षा, स्मरणीये पित्रादौ च संस्काराय प्रत्याक्षानुभवस्यापेक्षेति भावः ।

सरलार्थः—स्थले प्रत्यक्षे परोक्षे च मनोबुद्ध्यहंकाराख्यान्तःकरणत्रयस्य वृत्तिः क्रमशोऽक्रमशश्च बोध्या । परं परोक्षेऽन्तःकरणत्रयस्य वृत्तिः प्रत्यक्षपूर्विकैव जायते नान्यथेति भावः ॥ ४७ ॥

चतुर्णां त्रयाणां वा वृत्तयो नेतरनिमित्तनैरपेक्ष्येणकरणमात्राधीनाः करणानां सदातनत्वेन वृत्तीनां सदोत्पादप्रसङ्गात् ।

ननु विषयसन्निधानादेर्वृत्त्युत्पादे निमित्ततया न वृत्तीनां सदोत्पादप्रसङ्ग इति चेत्तथापि नियामकस्य कस्यचनाभावादाकस्मिकत्वप्रसङ्गोऽपरिहार्य एव। करणवृत्त्युद्भवस्यानैमित्तिकत्वे तु कदाचिच्चक्षुरेव शब्दग्रहणाय व्याप्रियेत, कदाचिच्च श्रोत्रमेव रूपग्रहणाय व्याप्रियेत, कदाचिच्च मन एव निश्चिनुयात्, कदाचिच्च बुद्धिरेव संकल्पयेदिति वृत्तीनां परस्परव्यतिकरप्रसङ्ग इयं त्वदीया वृत्तिरेतद्गोचरेति नियामकस्य कस्यचन हेतोरभावादिति शङ्काया निरासायोच्यते --

**कार्योन्मुखं करणमन्यतमञ्च दृष्ट्वा**
**व्यापारवत्करणमन्यतमं प्रसिद्धम् ।**
**भोगापवर्गपुरुषार्थनियुक्तमेतत्**
**सर्वं त्रयोदशविधं करणं प्रवृत्तम् ॥ ४८ ॥**

कार्योन्मुखं-स्वस्ववृत्त्युन्मुखमन्यतमं करणं दृष्ट्वा—विलोक्यान्यतमं करणं व्यापारवत्स्ववृत्तिमत्प्रसिद्धं प्रख्यातम् । यथा शक्तिपाणयो यष्टिपाणयो धनुष्पाणयः कृपाणपाणयश्च बहवः पुरुषा आक्रमणवेलायां त्वयेदं प्रहरणं ग्रहणीयमित्येवं प्रागेव कृतनियमाः सन्तः शत्रुदमनाय प्रसक्तास्तत्रान्यतमस्या-

भिप्रायमवगम्यान्यतमः प्रवृत्तो भवति। प्रवृत्तस्तु शाक्तीकः शक्तिमेव गृह्णाति न तु यष्टयादिकमेवं याष्टीकोऽपि यष्टिमेव न तु शक्त्यादिकम्, तथैवान्यतमस्य करणस्य स्वकार्य्यकरणाभिमुख्यादाकूतादन्यतमं करणं प्रवर्तते। एवञ्च करणप्रवृत्तेः परस्पराभिप्रायनिमित्तकत्वान्न वृत्तीनां परस्परव्यतिकरप्रसङ्गावसरलेशोऽपीति भावः।

ननु शाक्तीकादीनां चेतनत्वात्परस्पराभिप्रायमवगत्य प्रवर्तनन्तु समीचीनमचेतनानां करणानां तु तत्र सामर्थ्याभावात् प्रवर्तनं कथं समीचीनमिति तेषां प्रवर्तनाय तेषामधिष्ठाता करणानां स्वरूपसामर्थ्योपयोगाभिज्ञः कश्चन स्वीकर्तव्यो, यद्यपि अस्त्येव पुरुषोऽधिष्ठाताभिज्ञश्च तथाप्यसङ्गत्वान्निर्विकारत्वान्न तस्य प्रेरकत्वसम्भावनापीश्वरस्तु सांख्ये नास्त्येव, येन प्रेरकेण प्रेरितानि करणानि स्ववृत्तौ समर्थानि स्युरित्यत उक्तम्—"भोगापवर्गपुरुषार्थन्नियुक्तमेतत्" इति।

भोगापवर्गरूपपुरुषार्थ एव भविष्यदवस्थः प्रेरकः, स एव च प्रयोजयति करणान्येवञ्च करणस्वरूपाभिज्ञस्य कस्यचनान्यस्य कर्तुरङ्गीकारेणालम्। अत्रेदमाकूतम्—

भाविनावपि भोगापवर्गावव्यपदेश्यतया गुणेषु वर्तेते इति प्रकृतिगतावनागतौ तावेव करणानां प्रवर्त्तकौ। किञ्च तावदेव हि गुणाः प्रवर्त्तन्ते न न यावद् भोगमपवर्गं वा निर्वर्त्तयन्ति। निर्वर्तितभोगापवर्गास्तु समाप्ताधिकाराः सन्तो निवर्तन्त इति हि सांख्यसमयः।

भोगापवर्गरूपपुरुषार्थप्रेरितं त्रयोदशविधं करणं प्रवर्तत इति भावः। तथा च न केनचिदीश्वरेण जीवेन वा करणं प्रवर्त्यते, पुरुषार्थातिरिक्तेन केनचित् कर्त्रा किमपि साध्यं नास्तीति तदाश्रयणं निरर्थकमेव।

सरलार्थः—कार्य्योन्मुखस्य करणस्यान्यतमस्याभिप्रायमवगत्यान्यतमं करणं प्रवर्तते। प्रवर्तकौ च करणानां पुरुषार्थभूतभोगापवर्गावेव नेश्वरो जीवादिर्वेति तत्त्वम्॥ ४८॥

सम्प्रति करणानां क्रियां कार्यं भेदञ्च प्रदर्शयति—

एतत् त्रयोदशविधं करणं समुक्त-
मादानधारणविभासविधानकारि ।
आदेयधार्यविनिभास्यविधश्च कार्य्यं
संजायते दशविधं द्विविधप्रभेदात् ॥ ४० ॥

पूर्वोक्तानि ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च मनश्चैकमितीन्द्रियाण्येकादश बुद्धिरहङ्कारश्चैतत्त्रयोदशविधं त्रयोदशप्रकारकं करणम् । कर्त्रादिषट्कारकमध्ये साधकतमरूपः कारकविशेषः करणं, व्यापारयोगमन्तरा न च कारकत्वमिति करणानां व्यापारयोगं निर्दिशति—"आदानधारणविभासविधानकारि" इति, तत्र यथायथं कर्मेन्द्रियाणि वचनादीन्याहरन्ति स्वव्यापारेण व्याप्नुवन्ति । बुद्ध्यहंकारमनांसि तु प्राणादिलक्षणया स्ववृत्या शरीरादीनि धारयन्ति । ज्ञानेन्द्रियाणि च प्रकाशयन्ति ।

आदानधारणादिक्रियाणां सकर्मकत्वेन किं कर्म, कतिविधञ्च तदित्यत उक्तम्—"आदेयधार्यविनिभास्यविधञ्च कार्य्यम्" संजायते दशविधं द्विविधप्रभेदात्" । इति, उक्तस्य त्रयोदशविधस्य करणस्य द्विविधप्रभेदात्—दिव्यादिव्यभेदाद् दशविधं—दशप्रकारकमादेयं धार्यं विनिभास्यञ्च कार्य्यं बोध्यम् । तत्र कर्मेन्द्रियाणां वचनादानविहरणोत्सर्गानन्दाख्यमादेयं कार्य्यं दिव्यादिव्यभेदाद्दशविधम् । अन्तःकरणत्रयस्य मनोबुद्ध्यहंकाराख्यस्य प्राणादिलक्षणया स्ववृत्या धार्यं शरीरं, तच्च पार्थिवादि पाञ्चभौतिकं, शब्दादीनां पञ्चानां गणः पृथिवीति ते च पञ्च दिव्यादिव्यभेदाद् दशेति धार्यमपि दशविधम् । एवं ज्ञानेन्द्रियाणां शब्दस्पर्शरूपरसगन्धाख्यविनिभास्यकार्य्यमपि दिव्यादिव्यतया दशविधं बोध्यम् ।

सरलार्थः—आहरणधारणप्रकाशनकरं त्रयोदशविधं करणं स्वीकरणीयं तथापि कर्मेन्द्रियाणि पञ्चाहरणव्यापारकाणि; अन्तःकरणानि

त्रीणि धारणव्यापारकाणि, तथा ज्ञानेन्द्रियाणि प्रकाशनव्यापारकाणि। कर्मेन्द्रियाणां वाक्पाणिपादपायूपस्थानां पञ्चानां वचनादानविहरणोत्सर्गानन्दाख्याहार्यं कार्यं दिव्यादिव्यतया दशविधम्। मनोबुद्ध्यहंकाराणामन्तःकरणानां त्रयाणां प्राणादिलक्षणया वृत्या कार्य्यं शरीरं पार्थिवादि पाञ्चभौतिकं, शब्दादीनां पञ्चानां समूहः पृथिवीति ते शब्दादयः पञ्च दिव्यादिव्यभेदेन दशेति कार्यं धार्यं दशविधम्। एवमेव ज्ञानेन्द्रियाणां शब्दस्पर्शरूपरसगन्धाख्यप्रकाश्यकार्य्यमपि दिव्यादिव्यतया दशविधमिति तत्त्वम् ॥ ४० ॥

त्रयोदशविधानां करणानामवान्तरविभजनं निरूपयति—

**त्रिविधमान्तरमस्तिबहिर्गतं**
**दशविधं करणं प्रतिपादितम्।**
**भवति साधनमन्तरितस्य च**
**विषयसंग्रहणे बहिरिन्द्रियम् ॥ ५० ॥**

आन्तरं करणं—अन्तःकरणं त्रिविधं—त्रिप्रकारकम् मनोबुद्ध्यहंकाराख्यं देहान्तर्वर्तित्वादन्तःकरणं, बहिर्गतं बाह्यं करणं दशविधं प्रतिपादितम्—कथितमन्तरितस्य—अन्तःकरणस्य विषयसंग्रहणे—विषयज्ञापने बहिरिन्द्रियं साधनं-द्वारं भवति। बाह्येन्द्रियतन्त्रं हि अन्तःकरणं बाह्ये प्रवर्तत इति बाह्यगोचरवृत्युद्भवेऽन्तःकरणस्य बाह्येन्द्रियाणि सहायीभवन्तीति भावः। अन्तःकरणानां विषयसंकल्पाभिमानाध्यवसायेषु कर्त्तव्येषु ज्ञानेन्द्रियाण्यालोचनेन, कर्मेन्द्रियाणि यथास्वं व्यापारेण सहायीभवन्तीति तत्त्वम्।

सरलार्थः—मनोबुद्ध्यहंकाराख्यमन्तःकरणं च त्रिप्रकारकं ज्ञानेन्द्रियकर्मेन्द्रियभेदाद् बाह्यं करणं च दशप्रकारकम्। अन्तःकरणस्य बाह्यगोचरवृत्युत्पत्तौ बाह्यं करणं सहायीभवतीति तात्पर्यम् ॥ ५० ॥

बहिरन्तःकरणयोर्विशेषान्तरं निरूपयति—

**गृह्णाति बाह्यं करणं पदार्थान्**
**सर्वानहो साम्प्रतकालजातान् ।**
**परं सदान्तःकरणं त्रिकाले**
**भवान् पदार्थान् विषयीकरोति ॥ ५१ ॥**

साम्प्रतकालजातान्—वर्तमानकालिकान्, सर्वान्—निखिलान् पदार्थान् वस्तूनि बाह्यं करणं—बाह्येन्द्रियं गृह्णाति—विषयीकरोति ।

नन्वयमागमम् ( इदानीमागमम् ) एष गमिष्यामि (इदानीं गमिष्यामि) इत्यतीतानागतयोरागमनयोर्वाचो व्याप्रियमाणत्वाद् वर्तमानकालं बाह्यं करणमिति नियमनमसाम्प्रतमिति चेन्न वर्तमानसमीपस्यानागतस्यातीतस्य च वर्तमानत्वेन विवक्षिततयाऽदोषात् । अत एव कदाचित् "कदाऽऽगतोऽसि" इति पृष्टः सन्नतीते वर्तमानं प्रयुङ्क्ते—अयमागच्छामि ( इदानीमागच्छामि ) इति, "कदा गमिष्यसि" इति पृष्टः सन्ननागते वर्तमानं प्रयुङ्क्त एष गच्छामि ( इदानीं गच्छामि ) इति ।

वैयाकरणशिरोमणिना पाणिनिनाप्युक्तम्—
"वर्तमानसामीप्ये वर्तमानाद्वा" इति ।

गंगासमीपे गङ्गात्वारोपवद्वर्तमीनसमीपे वर्त्तमानत्वारोपसम्भवान्नातीवावश्यकमिदं सूत्रमिति महाभाष्यकाराः पतञ्जलिचरणाः । अतो वागपि वर्तमानकालविषयेति भावः ।

बाह्यकरणव्यापारस्य वर्तमानकालिकविषयतां संचर्च्य साम्प्रतमन्तःकरणव्यापारस्य त्रैकालिकविषयत्वमुद्घोषयति—

**"परं सदान्तःकरणं त्रिकाले**
**भवान् पदार्थान् विषयीकरोति" ॥**

परं किञ्चान्तःकरणं मनोबुद्ध्यहंकाराख्यं तु सदा सततं त्रिकालेऽतीतानागतवर्तमानकाले भवान् पदार्थान् विषयीकरोति गृह्णातीत्यर्थः ।

यथा: नदीपूरभेदाद् अभूद् वृष्टिरित्यतीतविषयानुमानम् । नदीपूरो नद्याः पूर्णत्वं तच्च रोधादपि ( स्यन्दमानानामपां द्रवत्वप्रतिबन्धहेतुसेत्वादिकात् ) कदाचित्सम्भवाद् व्यभिचारस्तद्वारणाय भेदपदं नदीपूरविशेषार्थकं बोध्यं, वैशेष्यञ्च बहुतरफेनफलपल्लवकाष्ठादिमद्रजस्वलजलवत्त्वसहकृतत्वं तथा चैतादृङ्नद्याः पूर्णत्वं स्रोतसः शीघ्रत्वञ्चावलोक्यानुमीयते नद्या उपरिदेशे वृष्टो देव इत्यतीतविषयानुमानम् ।

लताच्छादितपर्वतप्रदेशे धूमादग्निरिहास्तीति वर्तमानविषयानुमानम् । अनागतविषयानुमानञ्च—

असत्युपघातके पिपीलिकाण्डसञ्चरणाद् भविष्यति वृष्टिरिति । अयमभिप्रायः—वर्षमूलकारणे महाभूतसंक्षोभे सति भौमेनोष्मणा क्वथ्यमानाः खलु पिपीलिकाः स्वान्यण्डानि भूमिष्ठान्युपरिष्टान्नयन्ति तथा च पिपीलिकाण्डसञ्चरणाद् वर्षकारणम् ( भूतसंक्षोभम् ) अनुमाय पुनर्वर्षकारणाद् भावि कार्य्यं वर्षणमनुमीयते । नीडोपघातादपि ( गृहनाशादपि ) कदाचित् पिपीलिकाण्डसंचारो भवतीति तादृशसञ्चरणेन मिथ्यानुमानभवननिरासाय "असत्युपघातके" इति, पिपीलिकागृहोपमर्दकारणेऽसतीत्यर्थः । तथाचावित्रस्तानां भूयसीनां भूयस्सु स्थानेषु साण्डानां पिपीलिकानां सञ्चरणमेवानागतातीतवर्षणमनुमापयति न सञ्चारमात्रमिति न मिथ्यानुमानमिति तात्पर्यम् ।

"परं सदान्तः करणं त्रिकाले, भवान् पदार्थान् विषयी करोति" इत्याकर्ण्य पञ्चविंशतितत्त्वातिरिक्तं कालतत्त्वमपि कापिलैरास्थीयत इति न भ्रमितव्यं सांख्येऽप्रयोजकतया पञ्चविंशतितत्त्वातिरिक्तस्य कालतत्त्वस्यानङ्गीकारात् ।

किञ्च "अपरस्मिन्नपरं युगपच्चिरं क्षिप्रमिति काललिङ्गानि" इत्येवं वैशेषिकैरभिहितश्च कालो नाऽनागतादिव्यवहारभेदं प्रवर्त्तयितुमर्हति—यतः स एक इति ।

ननु कालस्य स्वरूपत ऐक्येऽपि उपाधिभेदादनागतादिभेदव्यवहार उपपत्स्यते यदाहुः—"एकत्वेऽपि सर्वकार्य्याणामारम्भक्रियानिवृत्तिस्थिति-निरोधोपाधिभेदान्मणिवत् पाचकादिवद् वा नानात्वोपचारः" इति, यथैकस्मिन् पुरुषेऽनेकसम्बन्धभेदानुविधायिन्यभिन्ने पिता पुत्रो भ्रातेति प्रत्यया भवन्ति-तद्वदेकः कालः "कार्य्यकारणविशेषापेक्षः परापरादि-प्रत्ययहेतुः ( कार्य्यस्य परापरादेः प्रत्ययस्य च यः कारणविशेषो वहुत-राल्पतरातीततपनपरिस्पन्दावच्छिन्नकालपिण्डसंयोगस्तदपेक्षः काल एकोऽपि परापरादिप्रत्ययहेतुरित्यर्थः ) इति चेन्न, कार्यारम्भकार्यस्थितिकार्य्य-निरोधादिरूपैः, वहुतराल्पतरदिनकरोदयास्तमयक्रियादिरूपैर्वोपाधिभिः कालोऽनागतादिव्यवहारं परापरादिव्यवहारं च प्रसूतं प्राप्नोतीति तैरुपाधि-भिरेवानागतादिव्यवहारस्योपपत्तौ निरर्थकस्य कालस्यानावश्यकत्वकल्पनात् ;

अयमभिप्रायः—

देशतःसन्निकृष्टयोर्युवस्थविरयोरेकस्मिन् शरीरावस्थाभेदानुमितातीत-सूर्योदयास्तमयरूपक्रियाप्रचयवहुत्वान्तरितजन्मनि स्थविरे शरीरावस्था-भेदानुमितातीतसूर्योदयास्तमयरूपक्रियाप्रचयाल्पत्वान्तरितजन्मानं युवान-मवधिं कृत्वा विप्रकृष्टा बुद्धिरुत्पद्यते, तामपेक्ष्य वहुतरसूर्योदयास्तमय-विशिष्टेन कालप्रदेशेन योगात् स्थविरे परत्वस्योत्पत्तिरित्यादिरूपा हि वैशेषिकादिकल्पना, तत्र मार्तण्डोदयास्तमयक्रियाप्रचयाल्पत्ववहुत्वविशिष्टादेव पिण्डात् परत्वापरत्वे भविष्यतः, कृतमत्रद्रव्यान्तरेण कालेनेति सांख्याः । यत्प्रागभावेन यः कालोऽवच्छिद्यते स तस्यानागतकालः, स्थितेन च वस्तुना यः कालोऽवच्छिद्यते स वर्तमानकालः, यत्प्रध्वंसेन यः कालो-

ऽवच्छिद्यते स इस्मातीतकाल इति हि तार्किककल्पना, तत्रारम्भस्थिति-निरोधक्रियाभिरेवानागतादिव्यवहारसिद्धेरलं भेदकल्पनयेति कापिलानां कल्पना।

योगभाष्यकाराश्च—

"स खल्वयं कालो वस्तुशून्यो बुद्धिनिर्माणः शब्दज्ञानानुपाती लौकिकानां व्युत्थितदर्शनानां वस्तुस्वरूप इवावभासते" इति।

योगवार्तिककाराः—

"क्षणस्तु वस्तुपतितः" इत्युत्तरभाष्यानुरोधात् क्षणाद्यानां कालत्वमेव, न वस्त्वन्तरत्वमन्यथा घटपटयोरिव क्षणयोर्द्वयोः सहभावापत्तिः, क्रमिकत्वानापत्तिश्च (आनन्तर्यरूपक्रमस्य प्रतियोग्यनुयोगिघटितत्वेन तस्यानङ्गीकारे प्रतियोग्यनुयोगिघटितक्रमानुपपत्तिः) क्षणाख्यः कालः सत्त्वादीनां द्रव्यरूपः परिणामविशेषः। यावता समयेन चलितः परमाणुः पूर्वदेशमतिक्रामेदुत्तरदेशमुपसङ्गच्छेच्च स कालः क्षण इति बोध्यम्। एवं च क्षणाद्याः सर्वेऽपि कालाः सर्ववस्तुपरिणामाधारा इति तत्वम्।

न च क्षणस्यैव कालत्वे "विषमः कालो गतः" क्रूरः कालोऽयमिति क्षणसमूहात्मकमहाकालादिसाक्षात्कारानुपपत्तिः, क्षणातिरिक्तस्य तस्यानङ्गीकारादिति वाच्यं क्षणसमूहानामेकबुद्धिविषयत्वारोपेण तद्व्यवहारोपपत्तेः।

अतएव "कालनित्यत्वश्रुतिस्मृतयश्च प्रवाहरूपकालरूपाः" इति योगवार्तिककृतः। एतेन "पूर्वदेशसंयोगाद्यवच्छिन्नः परमाणुक्रियैव क्षणस्तदतिरिक्तो नित्यश्च" इति वैशेषिकोक्तमपास्तम्, तन्मते विशिष्टस्य शुद्धानतिरेकात्, अतिरिक्तत्वे स्वसिद्धान्तविरोध इत्युभयतस्पाशापत्तेः, नित्यकालान्तराभ्युपगमे प्रमाणाभावाच्च। तस्मात्क्षणादिरूपः कालः क्षणद्वयाद्यवस्थायिपदार्थान्तरेभ्यो भिन्न एव स्थिरः पदार्थोऽभ्युपेय इति प्राहुः।

सरलार्थः—बाह्यं करणं वर्तमानकालिकान् पदार्थान् विषयीकरोति, अन्तःकरणन्तु त्रैकालिकान् पदार्थान् विषयीकरोतीति तयोर्विशेष इति भावः ॥ ५१ ॥

वर्तमानकालिकविषयाणां वाह्येन्द्रियाणां केषां स्थूलशब्दादिग्राहकत्वं, सूक्ष्मशब्दतन्मात्रादिग्राहकत्वञ्चेति विवेचयति ।

**तेषां दशानां बहिरिन्द्रियाणां**
**स्थूलाँश्च सूक्ष्मान् विषयान् समस्तान् ।**
**ज्ञानेन्द्रियाण्याददते तथा वाक्**
**स्थूलन्तु शब्दं विषयीकरोति ॥ ५२ ॥**

तेषां दशानां पूर्वोक्तानां वहिरिन्द्रियाणां ज्ञानकर्मेन्द्रियाणां मध्ये ज्ञानेन्द्रियाणि स्थूलाँश्च सूक्ष्मान् समस्तान् विषयान् विशेषाविशेषाख्यान् आददते – गृह्णन्ति—विषयीकुर्वन्ति । तत्र शान्तघोरमूढलक्षणविशेषरहितानाम् अतएवाविशेषसंज्ञकानां शब्दस्पर्शरूपरसगन्धतन्मात्राणां शब्दादिधर्मकसूक्ष्मद्रव्याणां विकारा एवाकाशवाय्वग्न्युदकभूमयः पञ्चभूतानि शान्तघोरमूढरूपाणि विशेषाः स्थूला अभिव्यक्तशान्तादिविशेषकाः परिणामा न तु तत्त्वान्तरप्रकृतयः । तथास्मितालक्षणस्याभिमानमात्रवृत्तिकस्य श्रवणदर्शनस्पर्शनादिरूपविशेषसहितस्य सत्त्वप्रधानस्याहङ्कारस्य श्रवणस्पर्शनादिधर्मविशेषकाणि पञ्चज्ञानेन्द्रियाणि, तस्यैव वचनादानविसर्गादिरूपशून्यस्य रजःप्रधानस्याहङ्कारस्य वचनादानगमनविसर्गादिरूपधर्मविशेषकाणि कर्मेन्द्रियाणि, "अन्यत्र मना अभूवं' 'त्वयोक्तं नाश्रौषम्" इत्यादिव्यवहारानुरोधाच्चक्षुरादीनां वागादीनाञ्च मनोऽधिष्ठितानामेव स्वस्वविषयेषु प्रवृत्तिरित्युभयप्रधानस्य श्रवणस्पर्शनादिवचनादानादिरूपधर्मविशेषशून्यस्याभिमानमात्रवृत्तिकस्याहङ्कारस्य श्रवणस्पर्शनादिवचना-

दानादिरूपधर्मविशेषकं मनश्च "विशेषाः" कार्याणीत्यर्थः । सूक्ष्मा अविशेषा-स्तन्मात्राणि शब्दादयः । तन्मात्राणामविशेषत्वं—

"तन्मात्राण्यविशेषाणि अविशेषास्ततो हि ते । न शान्ता नापि घोरास्ते न मूढाश्चाविशेषिणः"

इति विष्णुपुराणादवसीयते । अविशेषित्वञ्च शान्तघोरमूढभावैः पार्थक्ये-नाप्रतीयमानत्वम् । तदेव तन्मात्रं, ते एव तन्मात्रे, तान्येव तन्मात्राणि "मयूरव्यंसकादयश्च" इति ( पा २ १ ७२ ) सूत्रेण समासः तन्मात्रञ्च तन्मात्रे च तन्मात्राणि च तन्मात्राणि च तन्मात्राणि चेत्येकशेषेण तन्मात्राणीति शब्दतन्मात्रं, स्पर्शतन्मात्रं, रूपतन्मात्रं, रसतन्मात्रं, गन्धतन्मात्रं चेत्यर्थः । एतेषूत्तरोत्तारं प्रति पूर्वपूर्वस्य हेतुत्वेन शब्दतन्मात्रं शब्दमात्रधर्मकं, स्पर्शतन्मात्रं शब्दतन्मात्रकार्यतया शब्दस्पर्श-मात्रधर्मकं, रूपतन्मात्रं शब्दस्पर्शतन्मात्रकार्यतया शब्दस्पर्शरूपमात्रधर्मकं, रसतन्मात्रं शब्दस्पर्शरूपतन्मात्रकार्यतया शब्दस्पर्शरूपरसमात्रधर्मकम्, एवं गन्धतन्मात्रं शब्दस्पर्शरूपरसतन्मात्रकार्य्यतया शब्दस्पर्शरूपरसगन्ध-मात्रधर्मकमिति यावत् । तथा च मात्रशब्देन शान्तादिविशेषस्यैव व्यावृत्तिर्न तु पूर्वपूर्वकार्यत्वेनापन्नस्य गुणान्तरस्य ।

तन्मात्राणां पूर्वपूर्वकार्यत्वाभ्युपगमे प्रमाणन्तु "आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः, पृथिवी" इति—

तैत्तरीयकोपनिषद्वाक्यमेव, कार्याणां कारणगुणपूर्वकत्वस्वीकारात् ।

ऊर्ध्वमेव न कदाचिदधःस्रोतो रेतःस्रोतो येषां ते जनकसनकसनन्द-नादयस्तथा भीष्मादयो नैष्ठिका ब्रह्मचारिणः, सन्यासिनोऽपि तेषामूर्ध्व-स्रोतसां योगिनाञ्च श्रवणं शब्दतन्मात्रविषयं स्थूलशब्दविषयञ्च, अस्म-दादीनां तु श्रोत्रं स्थूलशब्दविषयमेव ।

ऊर्ध्वस्रोतसां तेषां त्वक् स्थूलसूक्ष्मोभयस्पर्शविषया, अस्मदादीनां तु स्थूलस्पर्शविषया, तेषां नयनं स्थूलसूक्ष्मोभयरूपविषयम्, अस्मदादीनां

तु स्थूलरूपविषयं; तेषां रसनं स्थूलसूक्ष्मोभयरसविषयम्. अस्मदादीनां तु स्थूलरसविषयम्, एवं तेषां घ्राणं स्थूलसूक्ष्मोभयगन्धविषयम्, अस्मदादीनान्तु स्थूलगन्धविषयमिति भावः। एवं कर्मेन्द्रियाणां मध्ये वाक् कं विषयीकरोती-तीत्युच्यते—"तथा वाक् स्थूलन्तु शब्दं विषयीकरोति" इति। वाक्-वागि-न्द्रियं स्थूलं शब्दं विषयीकरोति-गृह्णाति। अत्रानुमानाकारः—वागिन्द्रियं स्थूलशब्दविषयं स्थूलशब्दहेतुत्वाच्छब्दतन्मात्रवत्' अर्थाद् वागिन्द्रियं स्थूलशब्दमेव विषयीकरोति न तु शब्दतन्मात्रम्। शब्दतन्मात्रस्य वागिन्द्रि-यस्य चाहंकारादेवोत्पन्नतया तत उत्पन्नयोः कार्य्यकारणभावस्यासम्भ-वात्। लोकेऽप्येकस्मादुत्पन्नयोर्द्वयोः कार्यकारणभावो न युज्यत इत्यस्य सुप्रसिद्धत्वात्।

सरलार्थः—बहिरिन्द्रियाणां दशानां मध्ये ज्ञानेन्द्रियाणि पञ्च शब्द-स्पर्शरूपरसगन्धाख्यान् समस्तान् सूक्ष्मान् स्थूलांश्च पदार्थान् गृह्णन्ति। कर्मेन्द्रियाणां मध्ये वागिन्द्रियं तु स्थूलशब्दमेव गृह्णाति न तु सूक्ष्मशब्दमे-कोत्पन्नयोर्द्वयोः परस्परं ग्राह्यग्राहकभावविरहात्।

सम्प्रति कर्मेन्द्रियाणां चतुर्णां विषयान्निरूपयति—

> शेषं चतुष्कं करणञ्च पञ्च
> स्थूलान् पदार्थान् विषयीकरोति।
> अभ्यर्हणीयः स विभेद उक्तो
> बाह्येन्द्रियाणामपि सांख्यशास्त्रे ॥५३॥

शेषमवशिष्टं चतुष्कं करणं—पायूपस्थपाणिपादाख्यं, पञ्च स्थूलान् पदार्थान् शब्दादिकान् पूर्वोक्तान् विषयीकरोति गृह्णाति। बाह्येन्द्रियाणां—बहिरिन्द्रियाणामपि सांख्यशास्त्रे अभ्यर्हणीयः प्रशस्त एव विभेदः प्रकार उक्तः—प्रदर्शितः।

अयमभिप्रायः—

पार्थिवघटादीनां शब्दस्पर्शरूपरसगन्धात्मकतया पाण्यादिना तेषामाहरणतया च शब्दादिपञ्चविषयाणि चत्वारि पाणिपादपायूपस्थाख्यानि बहिरिन्द्रियाणि भवन्ति। वाक् च शब्दमात्रविषयेति कर्मेन्द्रियाणामपि बहिरिन्द्रियाणां परस्परं वैलक्षण्यमेतदिति भावः।

सरलार्थः—चत्वारि पाणिपादपायूपस्थाख्यानि बहिरिन्द्रियाणि पूर्वोक्तान् शब्दादीन् पञ्च स्थूलपदार्थान् विषयीकुर्वन्ति कर्मेन्द्रियं बहिरिन्द्रियन्तु वाक् केवलं स्थूलशब्दमात्रमेव विषयीकरोति। एवञ्च कर्मेन्द्रियाणामपि परस्परं वैलक्षण्यमिति भावः। ५३

त्रयोदशानां करणानां मध्ये कानि प्रधानानि कानि चाप्रधानानीति सहेतुकं निरूपयति साम्प्रतम्—

प्रधानमन्तःकरणं यतो हि
गृह्णाति सर्वं विषयाभिधानम्।
द्वाराणि शेषाणि भवन्ति तानि
बाह्येन्द्रियाणि प्रतिपादितानि ॥ ५४ ॥

हि इति निश्चयेन यतो-यस्मात्कारणात् सर्वं-निखिलं विषयाभिधानं-विषयजातं गृहणाति विषयीकरोत्यतोऽन्तःकरणं प्रधानं-मुख्यं, शेषाणि बहिरिन्द्रियाणि तानि पूर्वोक्तानि दश द्वाराणि-गौणानि-सहायकानि प्रतिपादितानि-कथितानि।

अर्थाद् बहिरिन्द्रियैरुपनीतं सर्वं विषयं यस्मात् ममतोऽहङ्कारा बुद्धिरवगाहते तस्माद् बहिरिन्द्रियाणि द्वाराणि-सहायकानि-गौणानि, द्वारवती मुख्या च सान्तःकरणा बुद्धिरिति भावः।

सरलार्थः,–बहिरिन्द्रियगोचरीकृतविषयं मनोऽहंकारसहिता बुद्धि-र्निश्चिनोति, तत्र बहिरिन्द्रियं द्वारं त्रिविधमन्तःकरणं द्वारि ( प्रधानं ) तत्रापि द्वयोर्मनोऽहंकारयोर्द्वारित्वं बुद्धेश्च द्वारित्वमित्यपि बोध्यम् ।।५४।।

न बहिरिन्द्रियाणामेव द्वारत्वमपि तु मनोऽहंकारयोरपि द्वारत्वं बुद्धेश्च द्वारित्वमेवेति सम्प्रति प्रदर्शयति

> बाह्येन्द्रियाहङ्कृतिमानसानि
> प्रदीपकल्पानि गुणात्मकानि ।
> विरोधशीलान्यपि मुक्तिभोगौ
> प्रकाश्य बुद्धौ च समर्पयन्ति ॥ ५५ ॥

बाह्येन्द्रियाहङ्कृतिमानसानि बाह्येन्द्रियाणि ज्ञानकर्मोभयेन्द्रियाण्य-हङ्कारो मनश्च, गुणात्मकानि-गुणरूपाणि प्रदीपकल्पानि-प्रदीपतुल्यानि, विरोधशीलान्यपि-विरुद्धान्यपि मुक्तिभोगौ-भोगापवर्गौ-समस्तं पुरुषार्थ-मिति यावत्, प्रकाश्य विषयीकृत्य बुद्धौ समर्पयन्ति-प्रयच्छन्ति ।

अत्रेदमाकूतम्—

यथा ग्रामणीगृहाधिपतिभ्यः करं गृहीत्वा जनपदस्य प्रान्तस्य वाऽध्य-क्षाय, प्रान्ताध्यक्षः समस्तदेशाध्यक्षाय देशाध्यक्षः सम्राजे समर्पयति तथैव बाह्येन्द्रियाणि विषयानादाय मनसे मनोऽहङ्कारायाऽहङ्कारश्च बुद्धये समर्पयति । बाह्येन्द्रियाणि मनोऽहंकारश्च सत्त्वरजस्तमसां गुणानां परिणामाः परस्परं विरुद्धस्वभावाः सन्तोऽपि पुरुषार्थप्रकाशने परस्परं सहकारित्वं प्राप्नुवन्ति । यथा तैलवर्तिवह्नयः परस्परं विरुद्धस्वभावाः सन्तोऽप्यन्धकारापनोदनपूर्वकं रूपप्रकाशनाय मिलिताः सन्तः प्रदीपतां-गताः प्रकाश्यं प्रकाशयन्ति ।

सरलार्थः—विरुद्धस्वभाववर्तितैलाग्नयो मिलित्वा प्रदीपरूपतां सम्प्राप्य यथा पदार्थान् प्रकाशयन्ति तथैव बाह्येन्द्रियमनोऽहंकारा विरुद्धस्वभावा अपि

पुरुषार्थं निखिलं भोगापवर्गात्मकं प्रकाश्य बुद्धौ समर्पयन्तीति भावः ॥५५॥

मनोबुद्ध्यहङ्काराणामन्तःकरणत्वाविशेषेऽपि समस्तानि करणानि बुद्धावेव कस्मात्समर्पयन्ति न तु बुद्धिरहङ्काराय मनसे वेति पर्यालोचयति—

भोगं समस्तं पुरुषस्य बुद्धिः
संसाधयत्येव तथा च भूयः
सूक्ष्मं प्रभेदं प्रकटीकरोति
प्रधानपुंसोरविकारभाजोः ॥ ५६ ॥

पुरुषस्य-चेतनस्य समस्तं-निखिलं भोगं-लौकिकसुखादिकं बुद्धिरेव संसाधयति-पुरुषेण सह साक्षात्सम्बद्धा पुरुषस्य समस्तं भोगमुपस्थापयति, अविकारभाजोः-विकारशून्ययोः प्रधानपुंसोः-प्रकृतिपुरुषयोः सूक्ष्मं-दुर्लक्ष्यं प्रभेदम्-अन्यत्वं प्रकटीकरोति प्रकाशयति ।

अत्रेदमवधेयम्—

समस्तानां करणानां व्यापाराः पुरुषार्थमेव प्रवर्तन्ते । यत्करणं पुरुषार्थस्य साक्षात्साधनं विद्यते तदेव प्रधानं मन्तव्यं बुद्धिरेव पुरुषार्थस्य साक्षात्साधमिति करणेषु बुद्धिरेव प्रधानम् । राजकार्यसिद्धौ साक्षात्साधनत्वात् समस्तदेशस्याध्यक्ष एव प्रधानं भवत्यन्यद् ग्रामण्यादि तदपेक्षयाऽप्रधानं भवति । पुरुषस्य सान्निध्यादापन्नचैतन्या बुद्धिः पुरुषस्य समस्तान् भोगान् संपादयति भोगः सुखदुःखादिसाक्षात्कारोऽयञ्च बुद्धौ सम्पद्यते बुद्धिश्च पुरुषतादात्म्यापन्ना पुरुषाकारेव प्रतिभासते । तत्र बुद्धौ सम्पद्यमानो भोगः पुरुषस्य भोग इति व्यवह्रियते । ज्ञानेन्द्रियमनोऽहंकारैः क्रमशः सम्पादिता आलोचनसंकल्पाऽहंकारा अध्यवसायाकारेण परिणताः बुद्धेः कार्यत्वमधिगच्छन्ति । कर्मेन्द्रियैः सम्पादिता वचनादिव्यापाराश्चाध्यवसायाकारेण परिणताः बुद्धेः कार्य्यत्वमधिगच्छन्ति । बुद्धौ च सम्पद्यमानाः तत्तादात्म्यापन्नत्वात् पुरुषस्य ते व्यवह्रियन्ते यथा सर्वाध्यक्षसैन्येन सह ग्रामाध्यक्षादिसैन्यं सर्वाध्यक्षस्यैवेति व्यवह्रियते । अनया रीत्या समस्तं भोगं पुरुषस्य बुद्धिः संसाधयति ।

ननु यदि पुरुषस्य सर्वान् भोगान् बुद्धिरेव संपादयति तदा कदापि मोक्षो न सम्पत्स्यते यतः सांख्ये सतः कदाप्यभावो न भवतीति बुद्धेः कदाप्यभावो न भविष्यति तथा तद्द्वारा "सम्पादिता भोगाः कदापि विरता न भवेयुस्तदभावाच्च मोक्षोऽसंभव इति शंकायाः शान्तये पर्यालोचयति— "सूक्ष्मं प्रभेदं प्रकटीकरोति" इति। अर्थाद् यथा बुद्धिः पुरुषस्य भोगं साधयति तथा पश्चात्सैव प्रधानपुरुषयोर्दुर्लक्ष्यमन्यत्वमपि साधयति।

ननु प्रधानपुरुषयोरन्तरस्य बुद्धिकर्तृकत्वात् कृतकस्यानित्यत्वाच्च बुद्धिकृतस्य मोक्षस्यानित्यत्वञ्च स्यादित्यतः पर्यालोचयति "प्रकटी करोति" इति सूक्ष्मं दुर्लक्ष्यमन्तरं सपरिणामं प्रधानमन्यदहमन्य इति पूर्वतो विद्यमानं परमज्ञानकारणादविद्यमानमिव लक्षितं बुद्धिः प्रकटीकरोति—प्रकाशयति नतूत्पादयति तेन नानित्यत्वं मोक्षस्य। यथा प्रदीपो विद्यमानान् पदार्थान् प्रकाशयति नत्वविद्यमानान् करोति तथैव पुम्प्रकृत्यो विद्यमानमेव सूक्ष्ममन्तरं बुद्धिः प्रकाशयति नत्वविद्यमानमन्तरमुत्पादयतीति तत्त्वम्।

सरलार्थः—बुद्धिः पुरुषस्याखिलानर्थान् संपादयति पश्चाच्च पुरुषस्यापवर्गमपि सा एव सम्पादयतीति भावः॥ ५६॥

तदेवं करणं विभज्य ज्ञानेन्द्रियाणां स्थूलसूक्ष्मविषयान् विभजते—

**तन्मात्रपञ्चकमहो विषयः सुसूक्ष्मो**
**भूतानि पञ्च तत एव विनिर्गतानि।**
**स्थूलाः परञ्च विषयाः कथिता इमानि**
**यस्माद्भवन्ति सुखदुःखविमोहरूपाः॥५७॥**

तन्मात्रपञ्चकम्—शब्दस्पर्शरूपरसगन्धतन्मात्राख्यं पञ्चप्रकारको विषयो—वस्तु सुसूक्ष्मोऽविशेषः, तत एव तेभ्य एव पञ्चतन्मात्रेभ्य आकाशादीनि पञ्च भूतानि विनिर्गतानि—जातानि परञ्चेमानि पञ्चभूतानि विषयाः सुखदुःखमूढात्मकाः परस्परं व्यावृत्ता अनुभूयमाना यस्माद् भवन्त्यतः स्थूला इत्युच्यन्ते।

अत्रेदमवधेयम्—

शब्दादितन्मात्रशब्दघटकीभूतमात्रपदमहिमानुभवयोग्यसुखदुःखात्मकविशेषत्वाभावबोधकशब्दप्रतिपाद्यतया शब्दादितन्मात्राण्यविशेषसंज्ञकानि सूक्ष्माणि व्यवह्रियन्ते ।

आकाशतन्मात्रात्केवलादाकाशमुत्पद्यते तस्मादेव वायुतन्मात्रसहिताद् वायुः, आकाशवायुतन्मात्राभ्यां तेजस्तन्मात्रसहिताभ्यां वह्निः, आकाशवायुतेजस्तन्मात्रेभ्योऽप्तन्मात्रसहितेभ्यो जलम्, आकाशवायुतेजोऽप्तन्मात्रेभ्यः क्षिततन्मात्रसहितेभ्योऽवनिरुत्पद्यत एवंरीत्या पञ्चतन्मात्रेभ्यो यथासंख्यमेकद्वित्रिचतुष्पञ्चभ्यो गगनानिलानलसलिलावनिरूपाणि भूतानि पञ्चोत्पद्यन्ते । गगनादिषु स्थूलेषु सत्त्वप्रधानत्वेन केचिच्छान्ताःसुखाः प्रसन्ना लघवः, केचन रजःप्रधानत्वेन घोरा दुःखा अनवस्थिताः, केचन च तमःप्रधानत्वेन मूढा विषण्णा गुरवः तेऽमी अन्योऽन्यव्यावृत्ता अनुभूयमाना विशेषाः स्थूला उच्यन्ते । अस्मदादिभिः परस्परव्यावृत्तानि तन्मात्राणि तु नानुभूयन्त इत्यविशेषाः सूक्ष्मा व्यपदिश्यन्त इति भावः ।

सरलार्थः—शब्दतन्मात्रस्पर्शतन्मात्ररूपतन्मात्ररसतन्मात्रगन्धतन्मात्राणि पार्थक्येनाननुभूयमानानि सूक्ष्माणि कथ्यन्ते । एतेभ्यः पञ्च तन्मात्रेभ्यो जायमानानि पार्थक्येनानुभूयमानानि गगनानिलानलसलिलावनिरूपाणि पञ्चभूतानि च स्थूलानि व्यपदिश्यन्त इति तत्त्वम् ।

सम्प्रति विशेषाणामवान्तरविशेषाः प्रकाश्यन्ते—

स्थूलं शरीरं जनितं विनाशि<br>
विनाशशून्यं गदितञ्च सूक्ष्मम् ।<br>
भूतानि पञ्चेति समुक्त आस्ते<br>
त्रिधात्मकोऽयं विषयो मतेऽस्मिन् ॥५८॥

जनितं-जन्यं स्थूलं-मातापितृजं शरीरं-देहं विनाशि-विनश्वरं गदित-मुक्तम् । पञ्चभूतानि-घटादिरूपाणि शरीराणि च जायमानानि, नाशवन्ति, सूक्ष्मशरीरं विनाशशून्यं विनाशरहितं गदितमुक्तम्, इति शरीरात्मकोऽयं विषयस्त्रिविधस्त्रिप्रकारकोऽस्मिन्मते साङ्ख्यनये समुक्तः-सम्यग्रूपेण वर्णितः ।

## अयमभिप्रायः—

विशेषाणां त्रिधा विशेषाः-सूक्ष्माः, तत्र सूक्ष्मा अनुमानगम्या न तु स्थूलशरीरवत्प्रत्यक्षोपलब्धाः, मातापितृजाः, प्रभूतदेहाश्च । मातापितृजाः-पृष्ठोदरजङ्घाकट्युरःशिरःप्रभृतिषड्भिः कोशैर्निर्मिताः षाट्कौशिकाः, प्रभूतदेहाश्च घटादयः । अर्थात् सूक्ष्मशरीरमेको विशेषः मातापितृजदेहो द्वितीयः, महाभूतस्तृतीयः, महाभूतवर्गे घटादीनां गणना ज्ञेया । तेषु शरीरेषु च वैलक्षण्यमित्थं ज्ञेयम्-महाभूतशरीरैः सह स्थूलानां मातापितृजानां शरीराणां विनाशो भवति अर्थात्तानि रसान्तानि भस्मान्तानि विडन्तानि वेति ।

## अत्रेदमवधेयम्—

अवसाने शरीरस्य तिस्रो गतयः—

क्षितौ निर्वातस्य गलितस्य क्षितिभावो, दग्धस्य भस्मीभावः, क्रव्यादिभिर्भुक्तस्य च विष्ठाभाव इति भावः ।

सरलार्थः—सूक्ष्मप्रभूतमातापितृजभेदात्त्रिविधं शरीरं सांख्ये वर्णितं, तत्र प्रभूतशरीरं मातापितृजञ्च शरीरं नश्वरं सूक्ष्मशरीरं तु नियतमिति भावः ।

सूक्ष्मशरीरं निरूपयति—

**नन्वादिसर्गे महदादिसूक्ष्मं**
**जातं शरीरं प्रतिपूरुषञ्च**
**प्रधानतो व्याहतिशून्यमेव**
**भोगाद्विहीनं स्थिरभावयुक्तम् ॥५६॥**

प्रधानतः-प्रधानाद् आदिसर्गे प्रथमसर्गारम्भकाले प्रतिपुरुषं-प्रतिचेतनमेकैकं महदादिसूक्ष्मं-महदहंकारैकादशेन्द्रियपञ्चतन्मात्रात्मकं सूक्ष्मं शरीरं जातं समुत्पन्नं तच्च शरीरं व्याहतिशून्यम्—अप्रतिहतप्रसरम्-अर्थात् तच्छरीरं शिलामप्यनुप्रविशति, स्थिरभावयुक्तम्-नियतम् आ चादिसृष्टेरा च महाप्रलयादवतिष्ठतेऽर्थाद् यावज्ज्ञानं नोत्पद्यते तावत्तिष्ठतीति भावः। एवं भोगाद्विहीनं-षाट्कौशिकं शरीरं विना निरुपभोगं सूक्ष्मशरीरं संसरतीति भावः।

सरलार्थः—प्रधानात् सर्गारम्भावस्थायामुत्पन्नमप्रतिहतगतिकं स्थायि महदहङ्कारैकादशेन्द्रियपञ्चतन्मात्राणां समूहोऽष्टादशतत्त्वात्मकं सूक्ष्मं शरीरं स्थूलशरीरमन्तरा निरुपभोगं नितान्तं संसरति ॥ ५६ ॥

ननु धर्माधर्महेतुकः संसारः सूक्ष्मशरीरस्य च न धर्माधर्मादिना सह योगस्तत्कथं सूक्ष्मशरीरं तत्तद्योनौ संसरतीति निरूपयति—

धर्मादिभावैरुपरञ्जितञ्च
लिङ्गाभिधानं गमनादिकार्य्यम् ।
पश्वादियोनौ कुरुते नितान्तं
तस्मादिदं सूक्ष्मतया प्रसिद्धम् ॥ ६० ॥

धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्य्याणि भावास्तदन्विता बुद्धिस्तदन्वितं च सूक्ष्मशरीरमिति तदपि भावैरुपरञ्जितम्—अधिवासितं यथा सुरभिचम्पकसंसर्गाद्वस्त्रं तत्सुरभिवासितमनुभूयते। तस्माद् भावैर्धर्मादिभिरुपरञ्जितत्वात् पश्वादियोनौ सर्वत्र नितान्तं निरन्तरं गमनादिकार्य्यं संसरणादिकार्य्यं कुरुते-सम्पादयति वायोरिव सूक्ष्मस्यैव नितान्तं गमनं यस्माद् भवति तस्मान्नितान्तगतिकत्वात् सूक्ष्मतया-सूक्ष्मत्वेनेदं पूर्वोक्तं सूक्ष्मशरीरं प्रसिद्धं-प्रख्यातमिति। कस्माद्धेतोः पुनः प्रकृतिमिव सूक्ष्मशरीर

महाप्रलयेऽपि न तिष्ठतीति निरूपयति—"लिङ्गाभिधानम्" इति। लयं नाशं गच्छति-एति-प्राप्नोतीति लिङ्गं, हेतुमत्त्वेन चास्य लिङ्गत्वं बोध्यम्। अर्थाद् यद्यत्कारणवत् तस्य तस्य तत्तत्कारणे लय इति व्याप्ति-ग्रहात् प्रकृतिकार्य्यस्य सर्वस्यापि साक्षात्परम्परया वा प्रकृतौ लयः, ततश्च सूक्ष्मशरीरस्यापि लयो महाप्रलये भवत्येवेति भावः।

सरलार्थः—पूर्वोक्तमष्टादशतत्त्वात्मकं सूक्ष्मं शरीरं धर्माधर्मादिभावैर-धिवासितम् पश्वादियोनौ सर्वत्र सततं संसरतीति भावः॥ ६०॥

नन्वहङ्कारेन्द्रियसहितैका बुद्धिरेव कुतो न संसरति? प्रत्यक्षानुप-लब्धेन सूक्ष्मशरीरेण न किमपि प्रयोजनमिति शंकां संहरति—

**आधारशून्यं न यथास्ति चित्रं**
**विम्बं विना नो प्रतिविम्बमास्ते।**
**तद्वच्छरीरं प्रविहाय सूक्ष्मं**
**निराश्रयं तिष्ठति नैव लिङ्गम्॥ ६१॥**

यथा 'अधारशून्यम्—आश्रयहीनं चित्रं-प्रतिकृतिर्नास्ति-न तिष्ठति-स्थातुं नार्हति, विम्बं विना-विम्बमन्तरा प्रतिविम्बं नो-नाऽऽस्ते-तिष्ठति-स्थातुमर्हति तद्वत् सूक्ष्मं शरीरं लिङ्गं-बुद्ध्यादि प्रविहाय-त्यक्त्वा निराश्रयम्-आश्रयहीनं न तिष्ठति न स्थातुमर्हति।

अयमाशयः—लिङ्गनात्-ज्ञापनात्प्रधानस्य लिङ्गं-बुद्ध्यादि कञ्चना-श्रयमन्तरा स्थातुं नार्हति।

अनुमानाकारश्चेत्थम्—मरणभाविजन्मनोर्मध्यकाले बुद्ध्यादयः पूर्व-प्रस्तुतदेहाश्रिताः पूर्वप्रस्तुततन्मात्रवत्त्वे सति बुद्ध्यादित्वाद् दृश्यमान-स्थूलदेहवृत्तिबुद्ध्यादिवत्। उपर्युक्तानुमाने केवलं बुद्ध्यादित्वं न हेतुर्यतो हि तथा सति सृष्टिक्रमे तन्मात्रेभ्यः प्रागुत्पन्नबुद्ध्यादिष्वपि बुद्ध्यादित्वहेतोः सत्वात्

तदवस्थायामपि बुद्ध्यादेराश्रयत्वेन किञ्चिच्छरीरमङ्गीकर्त्तव्यम् । वस्तुतस्तु तन्मात्रोत्पत्तेः प्राक् बुद्ध्यादेः कश्चनाश्रय एव न, किन्तु तन्मात्रोत्पत्तेरनन्तरं बुद्ध्यादयस्तु कुत्रचिच्छरीरे आश्रिताः स्थूलशरीराभ्यन्तरविद्यमान-बुद्धिवत्। एवं चोपयुक्तानुमाने तत्कालवर्तमानतन्मात्रविशिष्टं बुद्ध्यादित्वं हेतुर्न केवलं बुद्ध्यादित्वम् । तथाहि "बुद्ध्यादित्वमात्रस्य हेतुत्वे सर्गक्रमे पञ्चतन्मात्रोत्पत्तेः पूर्वं बुद्ध्यादित्वरूपस्य हेतोः सत्त्वात्तत्रोक्तसाध्यस्य भासत्त्वाद् व्यभिचारः स्यात्तद्वारणार्थं हेतुघटकसत्यन्तदलं तथा च तदानीं पञ्चतन्मात्रोत्पत्तेरभावेनोक्तहेतोस्तत्राभावान्न व्यभिचार इति भावः ।

एवञ्च सूक्ष्मैः शरीरैर्विना बुद्ध्यादयो न स्थास्यन्तीति तेषामाश्रयः सूक्ष्मं शरीरं स्वीकर्त्तव्यम् । आगमप्रमाणञ्चात्र—

"ततः सत्त्ववतः कायात् पाशबद्धं वशङ्गतम् ।
अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष बलाद् यमः ॥"

अत्राङ्गुष्ठमात्रपदं सूक्ष्मशरीरपरम् आत्मनो निष्कर्षासम्भवात् । अत्र-सूक्ष्मं शरीरमेव पुरुषः पुरुषपदार्थो यतो हि तत् पुरि-स्थूलशरीरे शेते ।

सरलार्थः—आश्रयशून्यचित्रकल्पना, बिम्बमन्तरा प्रतिबिम्बकल्पना च यथा निराधारा ( मिथ्या ) तथैव पञ्चतन्मात्रात्मकसूक्ष्मशरीरमन्तरा निराश्रयबुद्ध्यादिकल्पनाऽसारभूता मिथ्येतिभावः ॥ ६१ ॥

सूक्ष्मशरीरसत्तां सत्कृत्य यथा सूक्ष्मशरीरस्य संसरणं येन च हेतुना तदुभयं निरूपयति—

धर्मादिजन्यं विविधं शरीरं
विभुत्वयोगात्प्रकृतेस्तथेदम् ।
भोगापवर्गाय दधाति लिङ्गं
यथा नटः कौशलमादधानः ॥ ६२ ॥

यथा नटः कौशलं भूमिकामादधान उपस्थापयन् नाना रूपं धत्ते तथेदं लिङ्गं सूक्ष्मं शरीरं प्रकृतेः प्रधानस्य विभुत्वयोगाद् व्याएकत्वसामर्थ्याद् भोगापवर्गाय सांसारिकसुखादिमोक्षाय धर्मादिजन्यं विविधं शरीरं देहं दधाति धारयति।

अयमभिप्रायः—

सूक्ष्मशरीरस्य तत्तद्योनौ संसरणे भोगापवर्गरूपपुरुषार्थ एवोद्देश्यं धर्मादि च प्रवर्तकं कारणं धर्मादिकृतमव्यवहितं स्थूलशरीरग्रहणं च फलं धर्मादौ स्थूलशरीरग्रहणकारणप्रसङ्गेन स्थूलशरीरग्रहणं, गृहीत्वा चैतादृशं शरीरं पुनर्धर्मादौ प्रवृत्तिरिति संसरणानुपरम आविवेकात्। यथा नटस्तां तां भूमिकां पात्रविशेषवेषादिकं विधाय परशुरामो युधिष्ठिरो वत्सराजो वा भवति तथैव सूक्ष्मं शरीरं तत्तत्स्थूलशरीराकारेण परिणममानं मनुष्यः पशुर्वनस्पतिर्वा भवति। अन्योऽन्याश्रयदोषस्तु संसारस्यानादितया बीजाङ्कुरवद् वारयितव्यः।

सूक्ष्मशरीरस्येदृशो महिमा कुतस्त्य इति निरूपयति "विभुत्वयोगात्प्रकृतेस्तथेदम्" इति तथा चोक्तं पुराणे—

"वैश्वरूप्यात्प्रधानस्य परिणामोऽयमद्भुतः" इति।

वैश्वरूप्याद् नानारूपत्वादित्यर्थः।

सरलार्थः— यथा नटो पात्रविशेषवेषादिकं परिधाय रामः कृष्णो युधिष्ठिरो वा समये समये भवति तथैव लिङ्गशरीरं भोगापवर्गप्रदानाय प्रधानविभुत्वसामर्थ्याद् धर्मादिजन्यं विविधं देहं गृह्णाति ॥ ६२ ॥

"धर्मादिजन्यं विविधं शरीरमित्यत्र" धर्मादिनिमित्तं विविधं शरीरमिति नैमित्तिकमुक्तमिदानीं निमित्तनैमित्तिकयोः—कारणकार्य्ययोर्विभागं निरूपयति—

धर्मादिभावाः द्विविधाः समुक्ताः
स्वाभाविका वैकृतिकास्तथा ते ।
बुद्धिं श्रयन्त्येव निमित्तरूपां
कार्य्यं श्रयन्ते कललादिभावाः ।। ६३ ।।

अयमभिप्रायः—

धर्मादिभावाः पूर्वोक्ताः स्वाभाविकाः वैकृतिका द्विविधाः समुक्ताः सम्यग्रूपेण कथितास्तथा ते भावा निमित्तरूपां बुद्धिमेव श्रयन्ति कललादिभावाः कार्य्यं शरीरं श्रयन्ते आधारीकुर्वन्ति । धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याणि निमित्तरूपाः करणाश्रिता भावास्तत्कृता संसृतिः, एते च भावा द्विविधा द्विप्रकारकाः स्वभावसिद्धाः पुरुषप्रयत्नसाध्याश्च, स्वभावसिद्धाः सांसिद्धिकाः स्वाभाविकाः प्राकृतिका उच्यन्ते, पुरुषप्रयत्नसाध्याश्चाऽसांसिद्धिका वैकृतिकाः कथ्यन्ते । तत्र स्वाभाविकानां प्राकृतिकानां धर्मादीनामुत्तमभावानामुदाहरणम्—सर्गादावादिविद्वान् महामुनिर्धर्मज्ञानवैराग्यैश्वर्यसम्पन्नो भगवान् कपिलः, उपायानुष्ठानोत्पन्नानामसांसिद्धिकानां वैकृतिकानामुत्तमभावानां धर्मादीनामुदाहरणम्—महर्षिर्भगवान्वाल्मीकिः, अधमानामधर्मादिभावानां चोभयविधानां स्वाभाविकास्वाभाविकानामुदाहरणानि च स्वयमेवोह्यानि । तथा ते भावा निमित्तरूपां बुद्धिं श्रयन्ति अर्थात् करणात्मकबुद्ध्याश्रिताः । कललादिभावाः कार्यं शरीरं श्रयन्तेऽर्थाच्छरीराश्रिताः कललादिभावाः ।

अयमाशयः—कललं बुद्बुदः, मांसं, पेशी, करण्डोङ्गं, प्रत्यङ्गम्, व्यूहेश्चेति क्रमादुत्तरोत्तरभाविनो गर्भस्थजन्तुशरीरस्य परिणामाः, गर्भान्निर्गतस्य तु तस्यैव बाल्यकौमारयौवनवार्द्धकानि चत्वारः परिणामाः । गर्भाद्बहिर्भूतस्य तु परिणामाः लोकतः स्वयं निरीक्षणीयाः । तत्र कललं

वीर्यरजसोर्मिश्रीभावः, बुद्बुदस्तयोर्वर्तुलीभावः, मांसं घनीभावः, पेशी मांसस्य कोशीभावरूपो भागः, करण्डस्ततोऽप्यधिककठिनतरो भागः, सर्वथा पूर्णत्वं चाङ्गानामङ्गप्रत्यङ्गव्यूहविभागशब्देन व्यपदिश्यते ।

सरलार्थः—निमित्तारूपबुद्धितत्त्वाश्रिता धर्माधर्मज्ञानाज्ञानवैराग्या-वैराग्यैश्वर्यानैश्वर्यात्मका भावा द्विविधाः, स्वाभाविकाः वैकृतिकाश्च बोध्याः कललादिभावाश्च कार्य्यभूतशरीराश्रिता ज्ञेयाः ॥ ६३ ॥

निमित्तनैमित्तिकानि निर्दिश्य साम्प्रतं कतमस्य निमित्तस्य कतमन्नै मित्तिकमिति निर्दिशति ।

**धर्मादूर्ध्वमधर्मतश्च गमनं नीचैः सदा जायते**
**ज्ञानाल्लभ्यत एव मुक्तिरमलाज्ञानात्तथा बन्धनम् ।**
**वैराग्यात्प्रकृतौ लयश्च कथितो रागाद्धि लोकोदय**
**ऐश्वर्यादनियन्त्रिता गतिरहो रुद्धास्त्यनैश्वर्यतः ॥६४॥**

धर्मादूर्ध्वं द्युप्रभृतिषु लोकेषु गमनं व्रजनम्, अधर्मतश्च अधर्माच्चि नीचै-रधस्ताद् भूतलादिषु लोकेषु सदा सततं गमनं व्रजनं जायते ज्ञानादेवामला निर्मला मुक्तिर्लभ्यते प्राप्यते । तावदेव प्रधानं चेष्टते यावन्न विवेकख्यातिं सम्पादयति विवेकख्यातौ सम्पन्नायाञ्च कृतकृत्यतया विवेकख्यातिमन्तं पुरुषं प्रति परावर्त्तते । विवेकख्यातिं प्रति शनैः शनैः प्रकृतिः स्वयं प्रवर्त्तते तदेव हि तस्या अन्तिमं प्रयोजनं तच्च संसाध्य साध्यान्तराभावाद् यस्य पुरुषस्यापवर्गो वृत्तस्ततो निवर्तत इति भावः । तथा चोक्तम्—

"विवेकख्यातिपर्यन्तं ज्ञेयं प्रकृतिचेष्टितम्" इति ।

तथा तनैव प्रकारेणाऽज्ञानादतत्त्वज्ञानाद् बन्धनं बन्धो जायते । स च त्रिविधः प्राकृतिको वैकृतिको दाक्षिणकश्चेति ।. तत्रात्मबुद्ध्या ये प्रधानमुपासते तेषां प्राकृतिको बन्धः । उक्तञ्च पुराणादौ "पूर्वं शतसहस्रन्तु

तिष्ठन्त्यव्यक्तचिन्तकाः" इति । ( अव्यक्तचिन्तकाः प्रकृतिभावनापराः ) प्राकृतिकः प्रकृतिर्मूलमाया तत्रभवः-प्रकृतौ चेतनस्य लयात्मकः । ये पुनः प्रकृतिमपि जगन्मूलभूतां निरस्य विकारानेव ( भूतेन्द्रियाहंकारबुद्धीः ) पुरुषबुद्ध्योपासते तेषां वैकृतिको बन्ध इति । वैकृतिकः-विकृतयो-विकारा महत्तत्त्वादयस्तत्र भवः-महत्तत्वादिषु चेतनस्य लयात्मकः । उक्तञ्च—

"दशमन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः ।
भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिकाः ॥
बौद्धा दश सहस्राणि तिष्ठन्ति विगतज्वराः ।
ते खल्वमी विदेहा येषां वैकृतिको बन्धः ॥" इति ।
एकाग्निकर्महवनं त्रेतायाञ्च हूयते ।
अन्तर्वेद्यां च यद्दानमिष्टं तदभिधीयते ।
वापीकूपतडागादि देवतायतनानि च ।
अन्नप्रदानमारामाः पूर्तमर्घ्याः प्रचक्षते ॥

इत्याद्युक्तेनेष्टेन कर्मणा पूर्तेन च दाक्षिणको बन्धो जायते ज्ञतत्त्वानभिज्ञः स्वर्गादिकामनया इष्टकर्मकारी पूर्तकर्मकारी च जीवो बध्यते ।

वैराग्यात्-केवलाद्वैराग्यात्प्रकृतौ प्रधाने लयः कथितः-उक्तोऽर्थाद् वैराग्यसम्पन्नोऽपि पुरुषतत्वानभिज्ञः प्रकृतिलयमवाप्नोति । अत्र प्रकृतिपदं प्रकृतिमहदहंकारभूतेन्द्रियपरम् आत्मबुद्ध्यैतेषामुपासनेनोपासकस्यैषु एव लयो भवति कालान्तरे च पुनः स उत्पद्यते । रागाद् राजसाद्रागाल्लोकोदयो लोकावाप्तिरर्थाद् विविधयोनौ संसरणं भवति । रागाद्राजसादित्येनन रजोगुणस्य दुःखहेतुतया संसारस्य दुःखहेतुतां बोधिता । ऐश्वर्यादनियन्त्रिता गतिर्नियन्त्रणहीना गतिरर्थादिच्छाया हननं न जायते यतो हि ऐश्वर्यसम्पन्नो

यद्यद्वाञ्छति तत्तत् सर्वमेव सम्पादयति । अनैश्वर्यतस्तु रुद्धा गतिर्भवति अर्थात् सर्वत्रेच्छाया हननं भवति ।

सरलार्थः—धर्मात्सत्त्वलोकाद्यवाप्तिरधर्मादधोभूर्लोकाद्यवाप्तिः । ज्ञानाद्विमलोऽपवर्गो लभ्यतेऽज्ञानाद् (अतत्त्वज्ञानात्) बन्धः प्राप्यते केवलाद्वैराग्यात् प्रकृत्यादिषु लयो राजसाद्रागान्नानायोनिषु संसरणमैश्वर्यादिच्छाया अविघातोऽनैश्वर्याच्च सर्वत्रेच्छाया विघातो भवतीति भावः ॥ ६४ ॥

भावान् धर्मादीनष्टौ बुद्धिधर्मान् समासव्यासाभ्यां त्याज्यान् ग्राह्यांश्च दर्शयितुं सम्प्रति सङ्क्षिप्तं बुद्धिसर्गमुपस्थापयति ।

अज्ञानमाद्यं विरहश्च शक्ते<br>
द्वितीय आस्ते त्र तृतीयतोषः ।<br>
सिद्धिस्तुरीयेति चतुष्प्रकारा<br>
बुद्धेः कृतेयं प्रतिभाति सृष्टिः ॥ ६५ ॥

बुद्धेः कृता विहितेयं सृष्टिः सर्गः प्रतिभाति प्रकाशते । आद्यं प्रथममज्ञानमविद्या विपर्ययो बुद्धिपरिणामः । शक्तेर्विरहो द्वितीयः सर्गोऽर्थादशक्तिसंज्ञकः । अशक्तिरपि करणवैकल्यहेतुको बुद्धिपरिणाम एव । तृतीयतोषः-तृतीयस्तोषस्तुष्टिनामकः । तुरीया चतुर्थी सिद्धिरिति संक्षेपतो बुद्धिसर्गश्चतुर्विधः ।

सरलार्थः—संक्षेपतो बुद्धेः सर्गश्चतुष्प्रकारकः प्रथमोऽज्ञानात्मको द्वितीयोऽशक्त्याख्यस्तृतीयस्तुष्ट्याख्यश्चतुर्थः सिद्ध्यात्मक इति भावः ॥६५॥

विस्तरतो बुद्धिसर्गभेदान्निरूपयति—

न्यूनाधिकत्वात्तु पुनर्गुणानां<br>
चतुर्विधाया अपि बुद्धिसृष्टेः ।

पञ्चाशदुक्ताः प्रविभान्ति भेदाः
सांख्यीयनीतिं ह्यनुकूलयन्तः ॥ ६६ ॥

तु-किन्तु गुणानां सत्त्वरजस्तमसां न्यूनाधिकत्वादपचयोपचयाच्चतुर्विधायाश्चतुष्प्रकाराया अपि बुद्धिसृष्टेः पञ्चाशद् भेदा उक्ताः कथिताः, हि-निश्चयेन-सांख्यीयनीतिं सांख्योक्तसिद्धान्तमनुकूलयन्तः प्रविभान्ति-प्रकाशन्ते ।

सरलार्थः—गुणानां न्यूनाधिकतया ( गुणानामेकैकस्याधिकबलता द्वयोर्द्वयोर्वा, एकैकस्य न्यूनबलता द्वयोर्द्वयोर्वा कार्य्यानुमेया तदियमधिकबलता न्यूनबलता गुणानां वैषम्यं तेनैकस्य न्यूनबलस्य द्वयोर्द्वयोर्वाऽभिभवस्तन्महिम्ना ) चतुर्विधा अपि बुद्धिसर्गभेदाः सांख्यीयनयानुकूलाः पञ्चाशत्संख्याका भवन्तीति भावः ॥ ६६ ॥

पूर्वोक्तान् पञ्चाशद्भेदान्निरूपयति—

अज्ञानभेदास्तमआदिपञ्च
समेन्द्रियाणां विकलादशक्तेः ।
अष्टौ तथा विंशतिरेव तुष्टे
र्नवाष्टभेदाः प्रभवन्ति सिद्धेः ॥ ६७ ॥

अज्ञानस्य विपर्ययस्य भेदा विशेषास्तमआदिपञ्च-तमोमोहमहामोहतामिस्रान्धतामिस्रसंज्ञकाः पञ्च भेदा भवन्ति । एतेषामन्यत्र योगदर्शनादौ क्रमशः संज्ञाः-अविद्याऽस्मितारागद्वेषाभिनिवेशा इति, तत्र-अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या-तमः । पुरुषबुद्धयोरेकात्मतेवास्मिता-मोहः, दुःखजिघांसा द्वेषस्तामिस्रः, सर्वस्य प्राणिनः स्वाभाविको मरणत्रासोऽभिनिवेशोऽन्धतामिस्रः । यद्यपि अस्मितादयश्चत्वारोऽज्ञानस्य

कार्याण्यज्ञानस्वभावकानि तथापि कार्यकारणयोरभेद इति व्यत्ययेनाज्ञानभेदाः कथ्यन्ते ।

ननु कार्य्योपादानकारणयोरेवाभेदो न तु कार्यनिमित्तकारणयोः, एवञ्चाविद्याया अस्मितादीनां निमित्तकारणतया कथमभेदः कथञ्च अविद्याभेदाः पञ्चेति चेच्छ्रूयताम्—अविद्याविषयानेव स्वविषयत्वेनास्मितादयो गृह्णन्ति तथा च विषयाभेदमूलकोऽभेदो विषयाभेदमूलकाः-पञ्च भेदाश्च सूपपन्नाः । भगवता वार्षगण्येनाप्युक्तम्—

तमो मोहो महामोहो तामिस्रो ह्यन्धसंज्ञकः ।
अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः ।। वि.पु. )

समेन्द्रियाणां-सर्वकरणानां विकलाद्दोषादशक्तेरष्टौ तथा विंशतिरेव भेदा अर्थादष्टाविंशतिर्भेदा भवन्ति तुष्टे र्नवभेदाः सिद्धेरष्टौ भेदाः प्रभवन्ति प्रवर्तन्ते ।

सरलार्थः—तमआदिपञ्चप्रकारा अज्ञानभेदाः सर्वकरणानां दोषादशक्तेरष्टाविंशतिर्भेदास्तुष्टेर्नव सिद्धेरष्टौ भेदाः सांख्ये प्रोक्ताः ।। ६७ ।।

विपर्ययभेदानां पञ्चानामवान्तरभेदानिदानीं निरूपयति—

अष्टौ प्रभेदास्तमसो भवन्ति
भवन्ति मोहस्य तथाष्ट भेदाः ।
उक्ता महामोहदशप्रकारा-
स्तामिस्र आप्तोऽष्टदशत्वमन्धः ।। ६८ ।।

तमसोऽविद्याया अष्टौ प्रभेदा विशेषा भवन्ति। अष्टसु प्रधानमहदहंकारपञ्चतन्मात्रेषु आत्मभिन्नेषु आत्मभावना तमः । अष्टविषयत्वात्तस्य तमसोऽष्टविधत्वम् । तथा मोहस्याष्ट भेदा भवन्ति । अमरा अष्टविधमैश्वर्यमधिगत्य स्वामरत्वस्याभिमानं कुर्वाणा अणिमाद्यैश्वर्यं शाश्वतिकं मन्यन्ते

सेयमस्मिता मोहोऽष्टविधैश्वर्यविषयत्वादष्टविधः । महामोहदशप्रकारा महामोहस्य दश प्रकारा भेदा उक्ताः शब्दस्पर्शरूपरसगन्धेषु पञ्चषु दिव्यादिव्यत्वेन दशप्रकारेषु विषयेषु राग आसक्तिर्महामोहः स च दशविषयत्वाद्दशप्रकारः । तामिस्रोऽष्टदशत्वमाप्तः प्राप्तोऽर्थात् तामिस्रस्याष्टादश भेदा भवन्ति । द्वेषस्तामिस्रः शब्दादयो विषया दिव्यादिव्यतया दशविधाः स्वरूपत एव रागोत्पादकाः । अणिमाद्यैश्वर्यं तु स्वरूपतो रागोत्पादकं न, अपि तु रागोत्पादकानां शब्दादीनामुपायभूताः । एते शब्दादयो भोग्यरूपेण उपस्थिता अन्योन्येनोपहन्यमानास्तदुपायभूताः, अणिमादयस्तु स्वरूपत एवानिष्टकारका भवन्तीति दशभिः शब्दादिभिः सहाणिमाद्यष्टकमष्टदशधेति तद्विषयो द्वेषस्तामिस्रोऽष्टादशविषयत्वादष्टादशधा, एवमन्धतामिस्रोऽप्यष्टादशधा, देवा अणिमाद्यैश्वर्यमधिगत्य तद्द्वारोपलब्धशब्दादिविषयान् भुञ्जानास्त्रस्तास्तिष्ठन्ति यदस्माकं शब्दादिभोगानां तदुपायभूताणिमाद्यैश्वर्याणाञ्चासुरैर्नाशो न स्यादिति, तदिदं भयमभिनिवेशोऽन्धतामिस्रोऽष्टादशविषयत्वादष्टादशधेति । सोऽयं पञ्चविकल्पो विपर्ययोऽवान्तरभेदमाश्रित्य द्वाषष्टिरिति।

सरलार्थः—तमसोऽष्ट भेदा मोहस्य चाष्ट भेदा महामोहस्य च दश भेदास्तामिस्रस्याष्टादश भेदास्तथाऽन्धतामिस्रस्यापि अष्टादश भेदा बोध्याः ॥ ६८ ॥

पञ्च विपर्ययभेदान्निरूप्याष्टाविंशतिप्रकारामशक्तिं निरूपयति—

> बुद्धेर्वधेनैव सहेन्द्रियाणां
> घातः समुक्तो विरहश्च शक्तेः ।
> तुष्टेश्च सिद्धेर्विपरीतभावाद्
> बुद्धेर्वधाः सप्तदशत्वमाप्ताः ॥ ६९ ॥

बुद्धिवधेनैव सहेन्द्रियाणामेकादशेन्द्रियाणां घातो वधः शक्तेर्विरहः समुक्तः सम्यग्रूपेण कथितोऽर्थाद् बुद्धिवधेन सहैकादशेन्द्रियाणां वधोऽशक्ति-

रिति बुद्धिवधास्तुष्टेः सिद्धेश्च विपरीतभावाद् विपर्ययात्सप्तदशत्वमाप्ताः प्राप्ता अर्थात्—सप्तदशप्रकारा बुद्धिवधा इति भावः ।

## अत्रेदमवधेयम्—

एकादशेन्द्रियवधाः—बाधिर्यम्, अन्धता, प्रसुप्तिः उपजिह्विका, घ्राणपाको मूकता, कुणित्वं, खाञ्ज्यम्, गुदावर्तः, क्लैब्यमुन्माद इति । तत्र बाधिर्यम्—बधिरभावः कर्णशक्तिनाशः, अन्धता नेत्रशक्तिविनाशः, प्रसुप्तिः-त्वचाशक्तिशून्यता, उपजिह्विका-रसनाशक्तिविघातः, घ्राणपाकोऽजिघ्रता-घ्राणशक्तिनाशः, मूकता-वागिन्द्रियशक्तिविनाशः, कुणित्वं-कौण्यं कुणोऽस्यास्तीति कुणी तस्य भावः कौण्यं-करशक्त्यभावः, खाञ्ज्यम्—पङ्गुत्वं पादशक्तिहीनता, गुदावर्तः—पायुशक्तिविरहः उदावर्तापरपर्यायः, क्लैब्यं—षण्ढता रतिशक्तिविरहः, उन्मादो मनसः संकल्पशक्त्यभावः । एते च बुद्धिवधहेतुकत्वेन निर्दिष्टा एकादशेन्द्रियवधा नत्वशक्तिभेदपूरकत्वेन । एकादशेन्द्रियदोषैः पूर्वोक्तैरुत्पन्ना बुद्धेरशक्तिरपि एकादशप्रकारा ज्ञेया । हेतुहेतुमतोरभेदविवक्षया कारणभूतेन्द्रियवधकार्यभूतबुद्धिवधयोः सामानाधिकरण्यादेकादशभेदा बुद्धेरशक्तिर्बोध्येति भावः ।

अनया रीत्या इन्द्रियदोषद्वारा जायमानां बुद्धेरशक्तिं निरूप्य स्वरूपतोऽशक्तिं निरूपयति—"बुद्धेर्वधेनैव" इति । बुद्धेः स्वरूपतो वधाः कियन्त इत्यत्रोच्यते—"बुद्धेर्वधाः सप्तदशत्वमाप्ताः" इति । कस्माद्धेतोः? "तुष्टेश्च सिद्धेः विपरीतभावात्" इति । तुष्टयो नवप्रकारा इति तद्विपर्ययास्तन्निरुपणात्तत्प्रतियोगिकत्वान्नवधा भवन्ति, एवं सिद्धयोऽष्टौ इति तद्विपर्ययास्तन्निरूपणात्तत्प्रतियोगिकत्वात् सिद्धयोऽपि अष्टौ भवन्तीति भावः । एवं रीत्या बुद्धिवधाः सप्तदशसंख्याका भवन्तीति भावः ॥

सरलार्थः—बुद्धिवधेन सहैकादशेन्द्रियाणां वधोऽशक्तिरिति व्यपदिश्यते तुष्टेः सिद्धेश्च विपर्ययाद् बुद्धिवधाः सप्तदशसंख्याका भवन्तीति भावः ॥४९॥

सम्प्रति तुष्टिभेदान् परिगणयति—

कालश्च भाग्यं प्रकृतिस्तथा च
भवन्त्युपादानमिमाश्चतस्रः ।
बाह्यां विरत्यां विषयाद्धि पञ्च
सम्भूय जाता नव तुष्टयश्च ॥ ६० ॥

कालो भाग्यं प्रकृतिरुपादानञ्चेति इमाश्चतस्र आध्यात्मिक्यस्तुष्टयः । विषयाद्विरत्यामुपरमे पञ्च वाह्यास्तुष्टय इति सम्भूय मिलित्वा नव तुष्टयो जाता अभिमताः स्वीकृता इत्यर्थः ।

अत्रेदमाकूतम्—

प्रधानव्यतिरिक्तः पुरुषः सर्वथास्तीति ज्ञात्वाऽपि असद्उपदेशसन्तुष्टो यः पुरुषस्य साक्षात्काराय श्रवणमननादिना न प्रयतते तस्याध्यात्मिक्यस्तुष्टयश्चतस्रो भवन्ति । प्रकृतिभिन्नपुरुषमात्मानमधिकृत्य यस्मात्तास्तुष्टयस्तस्मादाध्यात्मिक्यः । ताः प्रदर्शयति—"कालश्च भाग्यं प्रकृतिस्तथा च । भवन्त्युपादानमिमाश्चतस्रः" इति । अर्थात् प्रकृत्युपादानकालभाग्याख्याश्चतस्र आध्यात्मिक्यस्तुष्टयः ।

प्रकृतितुष्टिः—विवेकसाक्षात्कारः प्रकृतेः परिणामविशेषस्तञ्च प्रकृतिरेव सम्पादयतीति पुरुषध्यानाभ्यासो व्यर्थोऽतो वत्स एवमेव श्रवणमननादिवियुक्तः सन् तिष्ठेत्येतादृशोपदेशमहिम्ना शिष्यस्योपदेष्टव्यस्य प्रकृतौ या तुष्टिः सा प्रकृतितुष्टिर्व्यपदिश्यते । तस्याश्च संसारमज्जनहेतुत्वादम्भ इति नामान्तरमिति भावः ।

प्रकृतेः परिणामविशेषोऽपि विवेकज्ञानं प्रकृतेर्मात्रान्न भवति अन्यथा सर्वान् प्रति प्रकृतेः समानतया सर्वस्य सततं स्याद् विवेकज्ञानं किन्त्वेवं न भवत्यपि तु सन्यासात्तज्जायतेऽतो वत्स सन्यासो ग्रहीतव्यो ध्यानाभ्यासो व्यर्थ इत्याकारकादुपदेशादुपदेष्टव्यस्य शिष्यस्य उपादाने (सन्यासे) या

तुष्टिः सोपादानतुष्टिः "सलिलम्" इत्युच्यते । उप वृद्धावस्थायाः समीपे आदीयते गृह्यते यः धर्मः सन्यासाख्यस्तदाख्या तुष्टिरितिभावस्तस्याश्च संसरणनिमित्तत्वात् सलिलमिति नामान्तरम् । सृधातोरिरन् प्रत्यये सरिरमिति सिद्धौ रलयोरभेदात् सलिलपदस्य सिद्धिर्भवति ।

सन्यासः शीघ्रं न निर्वाणदोऽपि तु कालान्तरे परिपक्वः सन् विवेकज्ञानद इति व्यग्रचित्तेन न कश्चनाऽपि लाभ इत्याकारकोपदेशे शिष्यस्योपदेष्टव्यस्य या काले तुष्टिः सा कालतुष्टिरित्यभिधीयते । कालप्रतीक्षाया उत्तापकत्वाद् अर्दकत्वाद् ओघ इति नामान्तरं तस्याः । तत्सिद्धिश्च 'उहिर् अर्दने' इति धातोर्बोध्या ।

विवेकज्ञानं न प्रकृतितो न सन्यासतो न कालादपि तु भाग्यादेव जायतेऽत एव मदालसाया सन्ततयोऽतिबाला अपि मातुरुपदेशादेव मुक्ता जातास्तस्माद्भाग्यमेव विवेकज्ञाने हेतुर्नापरं किञ्चिदित्युपदेशे शिष्यस्योपदेष्टव्यस्य भाग्ये या तुष्टिः सा भाग्यतुष्टिः कथ्यते । सा वृष्टिवदनियतत्वाद् वृष्टिनाम्नापि व्यवह्रियते वर्षत्यकस्माद्विवेकख्यातिमिति वृष्टिर्भाग्यमित्युच्यते ।

वाह्या निरूपयति—"वाह्या विरत्यां विपयाद्धि पञ्च" इति । शब्दस्पर्शरूपरसगन्धाः पञ्च भोग्यविषयास्तेषामसारत्वस्य दर्शनात् तद्विषयाणि पञ्च वैराग्याणि । वैराग्याणां पञ्चत्वं धनाद्यर्जनरक्षणक्षयभोगहिंसादीषदर्शनैर्मूलकमपि वक्तुं शक्यते ।

### अयमभिप्रायः—

पुरुषव्यतिरिक्तप्रकृतिमहदहंकारादीनेवात्मवुद्ध्या सेवमानस्य पुरुषस्य शब्दादिपञ्चविषयेभ्यो वैराग्ये जायमाने यास्तुष्टयो भवन्ति ता आत्मज्ञानाभावे आत्मव्यतिरिक्तप्रकृत्यादिवाह्यपदार्थविषयकत्वाद् वाह्यास्तुष्टय इति । वैराग्यस्योत्पत्तावेवैतास्तुष्टय उत्पद्यन्ते वैराग्यस्य च पञ्चहेतुभ्यो जायमानतया पञ्चविधत्वात्तुष्टयोऽपि पञ्चविधाः ।

विषया भोग्याः शब्दादयः पञ्च तेभ्यो विरतिर्वैराग्यमुत्पादनसंरक्षण-विनाशभोगहिंसादिपञ्चदोषैर्जायमानत्वात् पञ्चविधं भवति । तथाहि—धनोत्पादनोपायाः सेवादयः सेवकान् सन्तापयन्ति । उक्तञ्च—

"दृप्यद्दुरीश्वरद्वाःस्थदण्डिचण्डार्गचन्द्रजां
वेदनां भावयन् प्राज्ञः कः सेवास्वनुषज्जते ॥" इति ।

एवमन्येऽपि धनोत्पादनोपाया वाणिज्यादयोऽपि दुःखदा एव । एवं-विधविमर्शैर्विषयाद् विरतौ जायमानायां या तुष्टिः सा पारतुष्टिरुच्यते, यतो धनोत्पादनदुःखपारस्य प्रापयित्र्यतः पाराख्या सेति भावः ।

उत्पादितं धनं नृपचौराग्निजलौघादिभ्यो नङ्क्ष्यतीति तत्संरक्षणे महत्कष्टमिति विचारयतो विषयाद्विरतौ या तुष्टिः सा सुपारतुष्टिरिति ।

अर्जनदोषदर्शनेऽपि कदाचिद्भोगाभिलाषया विषयेषु प्रवृत्तिः स्याद् रक्षणभयार्त्तस्यं तु प्रवृत्तिरतितरामसम्भवेत्यभिप्रायादतितरां दुःखपारस्य प्रापयित्रीति सुपारेति । एवं महता कष्टेनोपार्जितं धनमुपभुज्यमानं नङ्क्ष्यतीति तत्क्षयं विमृशतो विषयाद्विरतौ या तुष्टिः सा पारापार-तुष्टिरिति ।

क्षयं भावयतो विषयेषु कदाचित् प्रवृत्तिः कदाचिदप्रवृत्तिर्यदा प्रवृत्ति-स्तदा दुःखस्य पारोऽन्यथाऽपार इति पारापारतुष्टिरिति भावः ।

शब्दादिभोगानामभ्यासात्प्रवर्धन्ते भोगवासनास्ताश्च विषयानुपलब्धौ कामुकं संतापयन्तीति भोगदोषं भावयतो विषयाद्विरतौ या तुष्टिः सा ऽनुत्तमाम्भस्तुष्टिरिति ।

विषयेभ्यः पुरुषं जलवद् द्रवन्त्यपि उत्तमतया न द्रवन्तीति "नृ उत्तमा द्राविका" इति अनुत्तमाम्भस्तुष्टिरिति भावः ।

एवमेव भूतहिंसां विना विषयोपभोगोऽसंभव इति हिंसादोषमङ्गी-कुर्वाणस्य विषयाद्विरतौ या तुष्टिः सा 'उत्तमाम्भस्तुष्टिरिति हिंसादोषस्य कारुण्योत्पादकत्वादुत्तमस्यार्द्रीभावस्य लाभादुत्तमाम्भस्तुष्टिरिति भावः। एवं बाह्याध्यात्मिकतुष्टिसंकलनेन नव तुष्टयोऽङ्गीकृताः सांख्ये।"

सरलार्थः—प्रकृत्युपादानकालभाग्याख्या आध्यात्मिकास्तुष्टयश्चतस्रः। अर्जनादिदुःखदर्शनाच्छब्दादिभ्यः पञ्चभ्य उपरतस्य बाह्यास्तुष्टयः पञ्च-विधविषयकत्वात् पञ्चेति मिलित्वा नव तुष्टयो ज्ञेयाः ॥ ७० ॥

सम्प्रति मुख्यामुख्यसिद्धीर्दर्शयति—

तर्कश्च शब्दोऽध्ययनं विनाशा-
स्त्रयस्य दुःखस्य सुहृत्सुलाभः।
दानं भवत्यष्टविधा सुसिद्धिः
पूर्वत्रयं किन्तु विरुद्धमस्याः ॥ ७१ ॥

तर्कः—ऊहः किं नित्यं किमनित्यमित्यादिविमर्शरूपः। आगमावि-रोधिन्यायेनाऽऽगमार्थपरीक्षणम् आगमार्थपरीक्षणञ्च सशंयपूर्वपक्षनिरा-करणेनोत्तरपक्षव्यवस्थापनं यन्मननमाचक्षते आगमिन इति तु मिश्राः। शब्दः-प्रधानपुरुषबुद्ध्यहंकारतन्मात्रेन्द्रियपञ्चमहाभूतविषयकं शब्दजनित-मर्थज्ञानं ततो मोक्ष इति शब्दाख्या सिद्धिः, शब्दपदमत्रोपलक्षणविधया शब्दजनितार्थज्ञानपरम्।

अध्ययनम्—वेदादिशास्त्राध्ययनात् पञ्चविंशतितत्त्वानां ज्ञानं ततो मोक्ष इति अध्ययनाख्या सिद्धिः। दुःखस्य त्रयस्य विनाशाः-संहारा आध्या-त्मिकाधिभौतिकाधिदैविकदुःखत्रयस्य विनाशाय गुरुं समधिगत्य तत उपदेशा-न्मोक्षं प्राप्नोतीत्येषा चतुर्थी दुःखत्रयविनाशरूपा सिद्धिः। एषा च दुःखत्रय-भेदात् त्रिधा। सुहृद्भिः विशुद्धहृदयैर्गुरुप्रभृतिभिः शास्त्रार्थसंवादः सुहृत्सु-

लाभः, कश्चित् सुहृज्ज्ञानमधिगत्य मुक्तो भवतीत्येषा सुहृत्सुलाभरूपा सिद्धिः। दानम्—धनादिदानं तच्च ज्ञानात्मकसिद्धिहेतुत्वात् सिद्धिरथवा दानं विवेकज्ञानशोधनं "दैपशोधने" इत्यस्माद्धातोर्दानपदव्युत्पत्तेः, तदपि विशुद्धज्ञानसाधकत्वात् सिद्धिरिति संकलनेनाष्टौ सिद्धयः सम्पन्नाः। किन्तु-परन्त्वस्याः सिद्धेः पूर्वत्रयं विपर्ययाशक्तितुष्टिरूपं विरुद्धं प्रतिकूलम्।

अत्रेदमवधेयम्—

विहन्यमानस्य दुःखस्य त्रिविधत्वात्तद्विघातोऽपि त्रिविधः। एतास्तिस्रः सिद्धयो मुख्याः। तदुपायत्वेन त्वितराः पञ्च गौण्यः सिद्धयः, इतरा अपि सिद्धयः कार्य्यकारणभावेन व्यवस्थिताः। तत्राद्याऽध्ययनसिद्धिः कारणमेव। मुख्याःसिद्धयस्तु कार्याण्येव। मध्यमाःसिद्धयस्तु कार्यरूपाःकारणरूपाश्च। शास्त्रविधिपूर्वकं गुरुमुखादध्यात्मविद्यापारायणश्रवणमध्ययनं प्रथमा सिद्धिः। संसारतरणस्य प्रथमहेतुतयेयं ताराख्या सिद्धिरुच्यते।

तत्कार्य-शब्दोऽत्र शब्दपदं शब्दजनितमर्थज्ञानपरं कार्ये कारणत्वोपचारात्। सुखपूर्वकं सरलतया वा संसारस्य तारकत्वात् सुताराख्या द्वितीया सिद्धिः।

तदित्थं पारायणरूपेणार्थरूपेण च द्विप्रकारकं श्रवणम्। तर्कः—ऊह आगमाविरोधिन्यायेनागमार्थपरीक्षणम्। परीक्षणञ्च संशयपूर्वपक्षनिराकरणेनोत्तरपक्षव्यवस्थापनं, तदिदं मननमाचक्षत आगमिनः। अध्ययनापेक्षया तथा शब्दापेक्षया अधिकतारकत्वात् तारताराख्या तृतीया सिद्धिः।

स्वकृतं मननममननमेवासुहृत्सम्मतमिति द्वितीयं मननं सुहृत्सुलाभः साधकयुक्तिभिः स्वयं परीक्षितमप्यर्थं न विश्वसिति यावन्न गुरुशिष्यसहाध्यायिभिः सह संवाद्यतेऽतः सुहृदां गुरुशिष्यसहाध्यायिनां संवादकानां

प्राप्तिः "सुहृत्सुलभः" शास्त्रार्थसंवादस्य रमणीयत्वाद् रम्यकाख्या चतुर्थी सिद्धिः ।

दानम्—विवेकज्ञानस्य शुद्धिः, दैप् शोधने धातोर्दानपदव्युत्पत्तेः । तदुक्तं भगवता पतञ्जलिना—

विवेकख्यातिरविप्लवा हानोपायः ( यो. सू. २।२६ ) अविप्लवः-शुद्धिः । सा च सवासनसंशयविपर्यासानां परिहारेण विवेकसाक्षात्कारस्य स्वच्छप्रवाहेऽवस्थापनम् । सा च शुद्धिः निष्ठापूर्वकनिरन्तरदीर्घकालानुष्ठित-ज्ञानाभ्यासपरिपाकमन्तराऽसंभवाऽतो ज्ञानाभ्यासादुत्पन्नायां शुद्धविवेक-ख्यातौ तादृशाभ्यासोऽप्यन्तर्भूतः । सार्वकालिकानन्दस्य हेतुत्वात् सदा-मुदिताख्या पञ्चमी सिद्धिः ।

दुःखत्रयविनाशात्मिकास्तिस्रः सिद्धयो मुख्याः प्रमोदमुदितमोदमाना इति संकलनेनाष्टौ सिद्धयः ।

तत्र षष्ठ्या आध्यात्मिकदुःखाभावात्मकसिद्धेः प्रकर्षेणानन्दप्रदत्वात् प्रमोदेति संज्ञा ।

आधिभौतिकदुःखाभावात्मिकायाः सप्तम्या अपि क्वचिन्मोदकत्वाद् मुदितेति संज्ञा ।

आधिदैविकदुःखाभावात्मिकाया अष्टम्या अपि कथञ्चिन्मोदकत्वाद् 'मोदमानेति' संज्ञा ।

अनया रीत्या सिद्धयोऽष्टौ नव तुष्टयश्च पूर्वमेवोक्ता आसां तुष्टिसिद्धीनां विपर्ययेण सम्पद्यमानाऽशक्तिरर्थाद् बुद्ध्युपघातः सप्तदशविधः । अत्र बुद्धिसर्गे सिद्धिर्ग्राह्येति प्रख्यातमेव । सिद्धिविघातकविपर्ययाशक्तितुष्टयो हेया इत्याख्यापयति—"पूर्वत्रयं किन्तु विरुद्धमस्याः" इति ।

पूर्वत्रयपदेन विपर्ययाशक्तितुष्टीनां पूर्वोक्तानां परामर्शः सिद्धिकरिणीनां मार्गेऽङ्कुश इव बाधकत्वात्ता विपर्ययाशक्तितुष्टयो हेया इति भावः ।

सरलार्थः—तर्कशब्दाध्ययनदुःखत्रयविनाशसुहृत्सुलाभदानाख्याः सिद्धयोऽष्टौ सांख्योक्ता विवेकज्ञानायोपादेयाः । तद्बाधकत्वाद् विपर्ययाशक्तितुष्टयस्तिस्रो हेयाः ॥ ७१ ॥

केवलं प्रत्ययसर्गाद्वा तन्मात्रसर्गादेव पुरुषार्थप्रयुक्तसृष्टेः प्रयोजनसिद्धावुभयसर्गाङ्गीकारो व्यर्थ इति शङ्कां निरसितुमुच्यते—

**धर्मादिभावान् प्रविहाय नास्ते**
**तन्मात्रसर्गो न हि तं विना ते ।**
**लिङ्गाख्यभावाभिधसर्ग एष**
**प्रवर्तते द्वैधमवेक्षमाणः ॥ ७२ ॥**

धर्मादिभावान् बुद्धिपरिणामान् प्रविहाय परित्यज्य तन्मात्रसर्गस्तन्मात्रपरिणामो नास्ते न भवितुं शक्नोति । तं तन्मात्रसर्गं विना ते धर्मादिभावा न भवितुं शक्नुवन्ति हि यतोऽतो द्वैधं द्विप्रकारकत्वमवेक्षमाणः प्राप्नुवानो लिङ्गाख्यभावाभिधसर्गः लिङ्गसर्गो भावसर्गश्च एषः प्रवर्तते जायते ।

अत्रेदमवधेयम्—

बुद्धिपरिणामान् विना तन्मात्रपरिणामो न स्वरूपतः सेत्स्यति न पुरुषार्थस्य साधनतामेष्यति । एवं तन्मात्रपरिणामं विना बुद्धिपरिणामो न स्वरूपतः सेत्स्यति न पुरुषार्थसाधनं भविष्यति अतो द्विविधस्य परिणामस्य ( लिङ्गभावाख्यसर्गस्य ) उपादेयत्वमुररीकरणीयम् । भोगनामकः पुरुषार्थः शब्दादिभोग्यविषयान् विना तथा स्थूलसूक्ष्मशरीररूपभोगायतनं विनाऽसम्भवऽतस्तन्मात्रपरिणामोऽपेक्षितः । उपर्युक्तो भोगः स्वसाधनभूतेन्द्रियाणि विना अन्तःकरणानि विना चासंभवः । न च तानि बुद्धिपरिणामधर्मादिभावान् विना सम्भवन्ति । अपवर्गनामकस्य द्वितीयस्य पुरुषार्थस्य

साधनभूतविवेकज्ञानमपि उभयविधसर्गं विनाऽसम्भवम् । अर्थाद् विवेकज्ञानसाध्योऽपवर्गोऽपि द्विविधसर्गमन्तरा न सेत्स्यति यतो विवेकज्ञानाय श्रवणमनननिदिध्यासनानि आवश्यकानि तानि च बुद्धिमनःस्थूलशरीरादीनि विनाऽसम्भवान्नतो द्विविधसर्गोऽपेक्षितः ।

भावलिङ्गयोरियं सृष्टिरनादित्वाद् बीजाङ्कुरवदन्योन्याश्रयदोषग्रस्ता न । कल्पारम्भेऽपि प्राचीनकल्पे जायमानस्य भावस्य लिङ्गस्य च सूक्ष्मरूपेणावस्थिततया प्रस्तूयमाना भावलिङ्गोत्पत्तिरसङ्गता न । अनया रीत्योभयसर्गः सूपपन्नः ।

सरलार्थः—भावसर्गमन्तरा लिङ्गसर्गो न लिङ्गसर्गमन्तरा भावसर्गोऽपि न सम्भवोऽतो लिङ्गाख्यो भावाख्यश्चेति द्विविधः सर्गोऽभ्युपेतव्यः ॥७२॥

प्रत्ययसर्गं विभज्येदानीं भूतादिसर्गं विभजते—

अष्टप्रकारो ननु दैवसर्गं
आस्ते तथा पञ्चविधस्तिरश्चाम् ।
एको मनुष्यस्य समासतश्च
प्रकीर्तितो भौतिकसर्ग एषः ॥ ७३ ॥

ननु निश्चयेन ब्राह्मः, प्राजापत्यः, ऐन्द्रः, पैत्रो, गान्धर्वो, याक्षो, राक्षसः पैशाचः, इत्यष्टप्रकारो दैवसर्गः । ब्रह्मलोके ब्राह्मसर्गः, प्रजापतयो दक्षादयस्तदीयःसर्गः प्राजापत्यः, इन्द्रलोके ऐन्द्रःसर्ग, पितृलोके पैत्रः सर्गः, गन्धर्वयक्षरक्षःपिशाचा अपि देवयोनितया देवा एवेति तत्सर्गोऽपि दैवसर्ग एवेत्यष्टविधो दैवसर्ग इति भावः । तथा पशुपक्षिमृगसरीसृपस्थावरा इति पञ्चप्रकारस्तिरश्चां सर्गस्तिर्यग्योनिसर्ग आस्ते—वर्तते तत्र पशवो ग्राम्याश्चतुष्पदा गवाश्वादयः, मृगा आरण्यकाश्चतुष्पदा हरिणादयः, पक्षिणः पतत्रवन्तो गृध्रादयः, सरीसृपा अल्पचरणाश्चरणरहिता वा सर्पशतपदीवृश्चि-

कादयः, स्थावराः प्रायः प्रत्यक्षचेष्टारहिता वृक्षादयोऽत्र सरीसृपेषु कीटादीनां, निर्जीवानां घटादीनां च स्थावरेष्वन्तर्भावो ज्ञेयः। यद्यपि लोमवल्लाङ्गूलवदर्थकं पशुपदमिति मृगपक्षेपादानं निरर्थकं विभागश्चासंगत इव प्रतीयते तथापि पशुपदं मृगपक्षिसरीसृपस्थावरभिन्नतिर्यग्योनिपरमिति न विभागानुपपत्तिः, न वा मृगपदोपादाननैरर्थक्यमिति ज्ञेयम्। पशवः सखुराश्चतुष्पदा गवाश्वादयः; मृगा अखुरा विविधपदा भूषकगिलहरीप्रभृतयः। ब्राह्मणत्वाद्यवान्तरजातिविशेषाविवक्षया मनुष्यस्यैकः सर्गः संस्थानस्य चतुर्ष्वपि वर्णेष्वविशेषादिति समासतः संक्षेपत एष भौतिकसर्गस्तन्मात्रसर्गः प्रकीर्तितः कथितः।

सरलार्थः—ब्राह्मप्राजापत्यैन्द्रपैत्रगान्धर्वयाक्षराक्षसपैशाचाख्योऽष्टविधो दैवसर्गः। पशुमृगपक्षिसरीसृपस्थावराख्यः पञ्चविधस्तैरश्चो सर्गः, ब्राह्मणत्वाद्यवान्तरजातिविशेषाविवक्षयैको मानवसर्गोऽयमेव संक्षेपतो भौतिकः सर्गः प्रख्यातः।

सम्प्रति चैतन्योत्कर्षापकर्षहेतुकोर्ध्वाधोमध्यभावेन भौतिकस्य पूर्वोक्तस्य सर्गस्य त्रैविध्यमुच्यते—

सत्त्वात्मकः सर्गविशेष ऊर्ध्वं
मध्ये प्रधानं रजसश्च लोके।
अधःस्थलोके तमसः प्रधानं
सर्गोऽस्ति धात्रादितृणानि यावत् ॥७४॥

ऊर्ध्वं—द्युप्रभृतिसत्यान्तो लोकोऽर्थाद् द्यौरन्तरिक्षं पृथिव्याः सन्निहितो भुवर्लोकः स्वर्महर्जनस्तपः सत्यं लोकश्च सत्त्वात्मकः सत्त्वबहुलःसर्गविशेषः, मध्ये भूर्लोके—सप्तद्वीपसमुद्रसन्निवेशे धर्माधर्मानुष्ठानपरत्वाद् दुःखबहुलत्वाच्च रजसो रजोगुणस्य प्रधानं रजोबहुलः सर्ग इतिभावः। अधः-

स्थलोके पश्वादिस्थावरान्ते तमसस्तमोगुणस्य प्रधानं तामोबहुलःसर्गः अधस्तनत्वञ्चात्र न दिगपेक्षमपि तु तमोऽपेक्षम् एवं मध्यत्वमपि रजोऽपेक्षं रजसः सत्त्वतमसोर्मध्ये स्थितत्वाद् एवं रीत्या धात्रादितृणानि यावत् ( ब्रह्मादिस्तम्बपर्यन्तम् ) संक्षेपतो भौतिकः सर्गो वर्णितः ।

सरलार्थः—ऊर्ध्वं ( भुवरादिलोके ) सत्त्वाधिकः, मध्ये ( मानवलोके ) धर्माधर्मादिकर्मसु रततया दुःखमयतया च रजोऽधिकः, अधोलोके ( पश्वादिस्थावरान्ते ) मोहमयत्वात् तमोऽधिक इति ब्रह्मादिस्तम्बपर्यन्तः सर्गः संक्षेपतो बोध्यः ॥ ७४ ॥

एवं रीत्या सर्गमुपवर्ण्य सम्प्रति सर्गस्य मोक्षसाधनवैराग्योपयोगिदुःखरूपत्वन्निरूपयति—

दुःखं जराया मरणस्य तस्मिन्<br>
सदा समुत्पद्यत एव पुंसः ।<br>
भेदग्रहो नास्ति च लिङ्गपुंसो<br>
स्तस्मान्निसर्गादिदमस्ति दुःखम् ॥७५॥

तस्मिन् तत्र शरीरादौ लिङ्गपुंसोः लिङ्गपुरुषयोर्भेदग्रहो नास्ति, पुरुषो न विचारयति यदहं भिन्नो लिङ्गञ्च भिन्नं तादात्म्याध्यासाद् अत एव पुंसः पुरुषस्य जराया वृद्धावस्थाया मरणस्य मृत्योर्दुःखं क्लेशः सदा सततं समुत्पद्यते जायत एव तस्माद् निसर्गात् स्वभावादिदं सर्गरूपं शरीरादिकं दुःखमेव ।

अत्रेदमाकूतम्—यद्यपि विविधविशेषानन्दभोगभाजः प्राणिभेदास्तथापि सर्वेषां जरामृत्युकृतं दुखं समानमेव तत्र परस्परं न किमपि वैशिष्ट्यम् । कृमेरपि मरणभयं "मा न भूवं" "भूयासम्" इत्याकारकमस्ति । दुःखञ्च भयकारणमिति मरणं दुःखम् । अत्र पुम्पदं पुरुषार्थकम् । पुरि लिङ्गे

शेते इति पुरुष इति पुरुषपदस्य व्युत्पत्तिस्तथा च लिङ्गं तत्सम्बन्धीति पुरुषोऽपि लिङ्गसम्बन्धीति दुःखादयः प्राकृता बुद्धिगुणा अपि चेतनस्य सुस्पष्टतया सम्बन्धिनो जाता इति चेतनस्य कथं ते सम्बन्धिन इत्याशङ्काया अवसर एव नोदेतीतिभावः।

सरलार्थः—तत्तादात्म्यापत्त्या लिङ्गपुरुषयोर्भेदाग्रहाच्छरीरादौ संसारे चेतनः पुरुषो जरामरणजं दुःखं प्राप्नोतीति संसारः स्वाभाविको दुःखद एवेति भावः ॥ ७५ ॥

सम्प्रति सर्गस्य कारणविकल्पान् निराकरोति—

बुद्ध्यादिभूतान्त इति प्रकृत्या
सर्गः कृतोऽस्त्येव परार्थहेतोः।
सर्वस्य पुंसोऽस्ति विमुक्तयेऽयं
परं निजार्थेन समो विभाति ॥ ७६ ॥

परार्थहेतोः परार्थकारणाद् बुद्ध्यादिभूतान्तः महदादिभूतान्तः सर्गः प्रकृत्या प्रधानेन कृतोऽस्ति विहितोऽस्ति सर्वस्य पुंसः प्रत्येकं पुरुषस्य विमुक्तयेऽपवर्गायायं सर्गो यद्यपि, परं किन्तु निजार्थेन स्वार्थेन समो विभाति—भासते।

अत्रेदमाकूतम्—

महदादिभूतान्तसमस्तसर्गः प्रधानेन कृतो नेश्वरेण, न वा ब्रह्मरूपोपादानकारणस्य परिणामोऽयं सर्गः, न वाऽकारणः। यद्ययमकारणस्तदाऽयं शाश्वतिको नित्यो भवेदुतास्यात्यन्ताभावो वा भवेत्। यतो हि यदकारणं वस्तु भवति तत् प्रकृतिवन्नित्यं भवति, उत शशशृङ्गवत्तस्याभाव एवानुभवपथमधिरोहति परं सर्गसम्बन्धे पूर्वोक्तोभयसंभावना न संघटते यतो जगदुत्पत्तिविनाशावनुभूयमानौ केनाऽप्यपलपितुमशक्यौ किञ्च जगतोऽस्तित्वमनुभूयमानं न

शशशृङ्गवदलीकम् । अतः सर्गोऽकारणं इति केनाऽपि वक्तुं न शक्यते । अर्थादस्यावश्यं किञ्चित्कारणम् । ब्रह्मणोऽपरिणामित्वान्न ब्रह्मपरिणामोऽयं सर्गः । आप्तकामतया निष्क्रियेश्वरोऽस्याऽधिष्ठाता प्रेरको वा भवितुं नार्हत्यतः ईश्वराधिष्ठितप्रकृत्या कृतोऽयं सर्ग इति कथनं खरीसृपश्रवणायितमेव ।

प्रकृतिकृतः सर्गश्चेत् तस्या नित्याया व्यापारशीलाया व्यापारस्यानुपरमात् संततं सर्गः स्यादिति न कस्याप्यपवर्गप्राप्तिरितिशङ्कां निरसितुमुच्यते—"सर्वस्य पुंसोऽस्ति विमुक्तयेऽयम्" इति ।

अयमभिप्रायः—

सर्वस्य पुरुषस्य मोक्षायाऽयं सर्गो यः स्वस्मै प्रतीयमानोऽपि वस्तुतः परस्मै पुरुषाय एव कृतो विद्यते । यथौदनेच्छुकः प्रवृत्तः पाके ओदनाय, ओदने निष्पन्ने च परावर्तते पाकात् तथा सर्वस्य पुंसो विमोचयितुं सन्नद्धा प्रकृतिर्यं पुमांसं विमोचयति तं प्रति भूयो न प्रवर्तते तदिदमुक्तम्—

"परं निजार्थेन समो विभति" इति । परं प्रकृत्या क्रियमाणः सर्गः स्वार्थेन समो भासमानोऽपि परार्थ एव । परस्मै विहितं कर्म स्वस्मै विहितं कर्म इव प्रयोजनसिद्धाववरुद्धं भवतीति भावः ।

यथा कश्चित्सुहृत्कार्यं करोति न करोति स्वकार्यम् एवं प्रधानं परकार्यमेव करोति न करोति स्वकार्यम् । यथा वा कश्चित् स्वार्थं परित्यज्य मित्रकार्याणि करोति एवं प्रधानमिति तत्त्वम् ।

सरलार्थः—निजार्थेन समो भासमानोऽपि महदादिभूतान्तःसर्गः प्रकृत्या कृतः प्रत्येकं पुरुषस्यापवर्गाय विद्यते नापरं वास्तविकं प्रयोजनं किञ्चिदिति बोध्यम् ॥ ७६ ॥

स्वार्थे परार्थे वा सर्गे चेतन एव प्रवर्तते न त्वचेतना प्रकृतिरचेतनस्य कुत्रापि स्वार्था परार्था वा प्रवृत्तिर्न दृष्टा, अतः प्रकृतेरधिष्ठाता कश्चन

चेतनोऽस्तीत्यङ्गीकरणीयम् । जीवस्तु चेतनोऽपि प्रकृतिस्वरूपानभिज्ञतया प्रकृतेरधिष्ठाता भवितुं नार्होऽतः सर्वज्ञश्चेतन ईश्वरस्तदधिष्ठातृत्वेन कल्प्य इति शङ्कामुन्मूलयितुमुच्यते—

अचेतनस्यास्ति यथा प्रवृत्ति
वत्सप्रवृद्धयै पयसस्तथैव ।
भेदग्रहाभावयुतस्य पुंसो
विमुक्तिहेतोः प्रकृतेः प्रवृत्तिः ॥ ७७ ॥

यथाऽचेतनस्य पयसो दुग्धस्य वत्सप्रवृद्धयै वत्सवर्धनाय प्रवृत्तिर्व्यापारोऽस्ति भवति तथैव भेदग्रहाभावयुतस्य भेदसंसर्गाग्राहिणः पुंसः पुरुषस्य विमुक्तिहेतोः प्रकृतेः प्रधानस्य प्रवृत्तिर्व्यापारो भवत्येव ।

न च पयोऽपि चेतनेश्वराधिष्ठितं सदेव वत्सवर्धनाय प्रवृत्तं भवतीत्यभीप्सितदृष्टान्तासद्भावाच्चेतनेश्वराधिष्ठितप्रकृतिप्रवृत्तौ प्रमाणाभावात् कस्याप्यचेतनस्य चेतनसम्पर्कादेव प्रवृत्तेर्दर्शनाच्चेति प्रकृतिप्रवृत्त्युपपत्तये कश्चन पुरुषविशेषश्चेतनेश्वरः स्वीकरणीय इति वाच्यं, कस्यापि चेतनस्य प्रेक्षावतः प्रवृत्तेः स्वार्थकारुण्याभ्यां व्यापृततया चेतनेश्वरस्य च स्वार्थकारुण्यविरहवत्तया प्रकृतिप्रवृत्त्युपपत्तौ तस्याकिञ्चित्करत्वात् ।

अयंभावः—कस्यापि चेतनस्य प्रवृत्तिः स्वार्थात् कारुण्याद्वा भवति, आप्तकामस्येश्वरस्य च जगत्सृष्टौ न कश्चन स्वार्थः परदुःखनिवारणेच्छा कारुण्यं तदपि ईश्वरे न संघटते, सृष्टेः पूर्वं जीवानामिन्द्रियशरीरविषयाणामुत्पत्त्यभावेन दुःखाभावात् तत्प्रहाणेच्छाया ईश्वरेऽभावात् । सृष्ट्यनन्तरं दुःखितान् दृष्ट्वेश्वरे करुणोदयश्चेत् करुणोदयात् सृष्टिः सृष्टेश्च करुणोदय इत्यन्योऽन्याश्रयस्य दुरुद्धरत्वात् ।

किञ्च यदीश्वरः कारुण्यात्प्रेरितः सृजति जन्तून् तदा सुखिन एव सृजेन्न विविधान् । शुभाशुभकर्मवैविध्याद् वैविध्यमिति चेत् कर्माधिष्ठा-

तृत्वमीश्वरस्य किम्प्रयोजनकम् ? यतोऽचेतनकर्माधिष्ठातृत्वभावादेवाचेतन-कर्मणः प्रवृत्त्यभावात् ततो जायमानानां शरीरेन्द्रियविषयाणामनुत्पत्त्यैव दुःखानां परिहारः सुशकस्तथा चेश्वरस्य कारुण्याय किञ्चित् कारणमेवावशिष्टं न स्यादितिभावः। अचेतनानां हि क्षीरजलवाय्वादीनां सर्वत्र स्वार्थकारुण्याभ्यां विनैव चेतनानामर्थानखिलान् साधयितुं प्रवृत्तिर्दृष्टा तद्दर्शनाच्चादृष्टा-या अचेतनप्रकृतिप्रवृत्तेः स्वार्थकारुण्यान्यतराभावेऽपि सूपपन्नत्वम्। अयंभावः—अचेतनायाः प्रकृतेः प्रवृत्तौ तु न स्वार्थो न वा कारुण्यं प्रयोजक-मपि तु पारार्थ्यमेव प्रयोजकमिति नोक्तदोषपङ्ककलङ्कलेशः।

सरलार्थः—वत्सविवृद्धयेऽचेतनपयःप्रवृत्तिवदचेतनप्रधानस्य पुरुषविमु-क्तये प्रवृत्तिः सुतरां सम्पन्नेतिभावः ॥ ७७ ॥

परं निजार्थेन समो विभातीत्युक्तमिदानीं तस्य विवरणं प्रस्तूयते—

समस्तलोकस्य यथा निजेच्छा-
निवर्तनायैव महान् प्रयत्नः।
तथा प्रधानस्य विशेष आस्ते
सदा विमुक्त्यै पुरुषस्य यत्नः ॥ ७८ ॥

यथा निजेच्छानिवर्तनायैव स्वेच्छापूर्त्यर्थमेव (स्वौत्सुक्यनिवृत्यर्थम्) समस्तस्य निखिलस्य लोकस्य जनस्य महान् अत्यधिकः प्रयत्नः कर्मप्रवृत्ति-स्तथा प्रधानस्य प्रकृतेः पुरुषस्य पुंसो विमुक्त्यै मोक्षाय विशेषो यत्नः कर्म-प्रवृत्तिरास्ते भवति।

इच्छाभीष्टोपलब्धौ निवर्ततेऽभीष्टश्च स्वार्थः पुरुषार्थः (मोक्षः) यतो हि यदभीष्टं भवति तदेव कार्यस्य प्रवृत्तेर्वा लक्ष्यं भवति। इच्छा प्रवृत्तिमात्ररूपा सांख्यनये गुणत्रयपर्याप्तवृत्तिर्न तु तार्किक इवेच्छायाश्चेतन-धर्मत्वमिति तस्या अचेतने वृत्तिरत्रोपक्षिप्ता लोकप्रवृत्तिदृष्टान्तेन प्रति-पिपादयिषितो प्रकृतिपुरुषव्यवहारे योजयति—

"यथा प्रधानस्य विशेष आस्ते
सदा विमुक्त्यै पुरुषस्य यत्नः" ॥ इति

सुरलार्थः—यथा स्वेच्छापूर्त्यर्थं लोकाः कर्मणि प्रवर्तन्ते तथाऽव्यक्तमपि पुंसो विमोक्षार्थं प्रवर्तत इति भावः ॥ ७८ ॥

प्रधानस्य प्रवर्तकः पुरुषार्थो यथा, तथा निवर्तकः क इत्याशयेनोच्यते—

रङ्गस्थदर्शकसमीपगनर्तकी स्वं
नृत्यं विधाय विरताऽस्ति यथा स्वनृत्यात् ।
पुंसस्तथैव सविधे प्रकृतिः स्वकीयं
रूपं प्रकाश्य विनिवृत्तिमियं प्रयाति ॥७९॥

यथा रङ्गस्थदर्शकसमीपगनर्तकी—सभास्थसभ्यपार्श्वगवाराङ्गना स्वं नृत्यं विधाय सन्दर्श्य स्वनृत्याद् विरता—उदासीना अस्ति-भवति तथैवेयं प्रकृतिः प्रधानं पुंसः पुरुषस्य सविधे सन्निधौ स्वकीयं रूपं प्रकाश्य (शब्दाद्यात्मनात्मानं पुरुषव्यतिरिक्तं प्रकाश्य) विनिवृत्तिमुदासीनतां प्रयाति—गच्छति ।

अत्रेदमवधेयम्—

"प्रकृतिः स्वकीयं रूपं प्रकाश्य" इत्यस्य कोऽर्थो यदि प्रकृतेरव्यक्तं यद्रूपं तत्प्रकाश्येत्यर्थस्तदाऽनुमितायाः प्रकृतेः प्रत्यक्षत्वमसम्भवं यद्यव्यक्तम-गृहीत्वा व्यक्तरूपं शब्दाद्यात्मकं गृह्यते तदा तादृशस्य रूपस्य प्रदर्शनन्तु पूर्वत एव भवति तथा च प्रकृतेर्निवृत्तिः पुरुषस्य च मोक्ष इति कथनम-समञ्जसमिति चेद् विवेकज्ञानात् पूर्वं शब्दादीनां प्रत्यक्षमेतत् सर्वं मद्भोग्यं विद्यत इत्येतद्रूपेण भवति, सूक्ष्माया अव्यक्तभूतायाः प्रकृतेरेव स्थूलानि तथा व्यक्तरूपाण्येतानि सन्तीत्येवंरूपेण न भवति, सामान्यतः प्रकृतिरूपेण यद्येषां ग्रहणन्न तदा स्वरूपभूतपुरुषाच्छब्दादिरूपप्रकृतिः सर्वथा भिन्नेत्यस्य का कथा?, एतादृशपरिस्थितौ विवेकज्ञानमन्तरा प्रकृतिप्रवृत्तिविरामः

पुरुषस्य च मोक्षः कथमुपपद्येत ? यदा च शब्दाद्यात्मकजडा प्रकृतिश्चिद्रूपात् पुरुषाद् भिन्नेत्याकारकविवेकज्ञानं जायते तदा सुतरां प्रकृतिप्रवृत्तिविरामः पुरुषस्य च मोक्षोपलब्धिरिति समाधानमवधेयम् ।

सरलार्थः—यथा नर्तकी रङ्गस्थदर्शकानां समक्षे नृत्यायैककालमुपस्थाय नृत्यं विधाय भूयो न नृत्यति तथा प्रकृतिरपि मोक्षार्थं पुरुषमुपस्थाय मोक्षं प्रदाय च पुनस्तस्य पुरुषस्य सान्निध्यं नाधिगच्छतीतिभावः ॥ ७९ ॥

लप्स्यमानस्वार्थनिबन्धनप्रवृत्तिकदासीवत् प्रकृतेरारम्भोऽपि स्वार्थो न परार्थ इत्यकारिकाया आशङ्काया निरासायोच्यते—

व्यर्थं गुणैर्हीनतमं पुमांसं
संसेवते प्रत्युपकारहीनम् ।
गुणैः परीता प्रकृतिः प्रयत्नै
र्नानाप्रकारैरुपकारणीयम् ॥ ८० ॥

गुणैः परीता व्याप्ता, उपकारिणीयं प्रकृतिः—गुणैर्दयादाक्षिण्यादिभिर्हीनतमम्—अत्यन्तं हीनं शून्यं व्यर्थं—निरर्थकं प्रत्युपकारहीनं प्रत्युपकृतिरहितं पुमांसं पुरुषं संसेवते संराधते ।

अयंभावः—उपकारी सर्वगुणसम्पन्नोऽपि सेवकः स्वकृतसेवायाः फलमप्राप्नुवन्नपि प्रत्युपकारहीनं निर्गुणमपि स्वामिनं यथा सेवते तथोपकारिणी सर्वगुणसम्पन्नाऽपीयमुदारा प्रकृतिरनुपकारिणे निर्गुणाय पुरुषाय प्रयत्नं क्रियमाणा स्वयं निष्फलाऽपि केवलं परार्थं ( पुरुषार्थम् ) एव यतते न तु स्वार्थं यतत इति भावः ।

सरलार्थः— उपकारिणो गुणवती प्रकृतिः प्रत्युपकारहीनं निर्गुणं पुरुषं बहुभिरुपायैः संसेवते ॥ ८० ॥

मन्ये प्रकृतेरारम्भः परार्थो न स्वार्थस्तथापि यथा नर्तकी स्वकीय-नृत्याद् विरताऽपि द्रष्टृकौतूहलान्नृत्याय पुनः प्रवर्त्तते तथात्मानं दर्शयित्वा विरताऽपि प्रकृतिः पुनः प्रवृत्ता स्यादितिशङ्कानिरासायोच्यते ।

यथा मृदुत्वं प्रकृतौ विभाति
तथा न कस्मिन्नपि वस्तुजाते ।
अहन्तु दृष्टेति भवेद् यदा धी-
स्तदा पुमांसं न हि पश्यतीयम् ॥ ८१ ॥

प्रकृतौ प्रधाने यथा मृदुत्वं विभाति भासते तथा कस्मिन्नपि वस्तुजाते-पदार्थसङ्घे न विद्यते । अहन्तु दृष्टाऽवलोकिता पुरुषेणेत्याकारक धीर्बुद्धिः प्रकृतेरुदेति यदा तदेयं प्रकृतिर्हि निश्चयेन पुमांसं पुरुषं न पश्यति नाऽवलोकयति ।

मृदुत्वमतिपेशलता सुकुमारता परपुरुषदर्शनासहिष्णुतेति यावत् । असूर्यम्पश्या कुलाङ्गना त्रपया परदर्शनेऽप्रवृत्ता प्रमादाच्च्युतपटप्रान्ता केनचित् परपुरुषेणावलोकिता चेत्तदासौ चेष्टतेऽप्रमत्तां मां न पुनः कश्चित् परपुरुषः पश्येदिति । एवमेव प्रकृतिरपि कुलाङ्गनातोऽप्यधिका त्रपावती वर्णिता दृष्टा विवेकेन चेन्न पुनर्दृष्टा भवतीति भावः ।

सरलार्थः—प्रकृत्यपेक्षया त्रपावद् वस्तु न किञ्चिदस्तीति सा[illegible]तिः । केनचन परपुरुषेण दृष्टाऽस्मीत्याकारकबुद्धेरुदये सा तं परपुरुषभूतं पुरुषं नावलोकयतीति भावः ॥ ८१ ॥

सृष्टिकारणं न प्रकृतिरपि तु कालादिकमेव तथा च पूर्वोक्तं सर्वमस-मञ्जसमिति शंकां संहर्त्तुमुच्यते—

गदन्ति कालं सुतरां सुसाधका
वदन्ति वेशं किल कारणं जनेः ।

निसर्गमेके कवयो विचारका
गुणैर्विहीनान्न तु सृष्टिरीश्वरात् ॥ ८२ ॥

जनेः-जन्मनः-संसारस्य ( सृष्टेः ) कारणमीशमीश्वरं केचन वदन्ति वाथवा सुसाधकाः सुतरां सुस्पष्टं कालं गदन्ति-ब्रुवते निसर्गं स्वभावमेके चार्वाकप्रभृतयो वदन्ति, तु किन्तु कवयो वृद्धा मनोषिणो विचारका विचारशीलाः सांख्याः कथयन्ति गुणैर्विहीनादीश्वरात् सृष्टिः सगुणा सृष्टिर्नोपपद्यत इति शेषः ।

अत्रेदमवधेयम्—

स्वसुखदुःखभोगयोरसमर्थोऽयं जीव ईश्वरप्रेरणयैव सुखदुःखदस्वर्गनरकादीनि भुङ्क्तेऽत ईश्वरः कारणं सृष्टेः ।

उक्तञ्च—"अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत् स्वर्गं नरकमेव वा ॥"

अपरे स्वभाव एव कारणं सृष्टेरिति ब्रुवते—

केन शुक्ली कृता हंसा मयूराः केन चित्रिताः । स्वभावेनैवेति ।

केचन काल एव कारणमिति स्वीकुर्वन्ति—

"कालः पचति भूतानि कालः संहरते जगत् ।
कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः ॥" इति

अत्र सांख्यानां विमर्शः—

ईश्वरस्य निर्गुणत्वात् सुखदुःखादिगुणवत्यः प्रजाः कथं जायेरन् ? कथं वा निर्गुणादेव पुरुषात् ? तस्मान्नेश्वरान्न वा पुरुषात्सृष्टिरेषा सगुणाऽपि तु यथा शुक्लेभ्यस्तन्तुभ्यः शुक्ल एव पटः, कृष्णेभ्यःकृष्ण एव पटो जायते न भिन्नस्तथा त्रिगुणात् प्रधानात् त्रिगुणास्त्रयो लोकाः समुत्पन्ना इत्येव पक्षो ज्यायान् । ईश्वरः पुरुषश्च निर्गुणस्तस्मान्निर्गुणात् सगुणानां लोकानामुत्पत्तिरनुपपन्ना ।

व्यक्ताव्यक्तपुरुषास्त्रयः पदार्थाः सांख्ये वर्णितास्तत्र कालस्य व्यक्तपदार्थेऽन्तर्भावः। कालो हि व्यक्तः सर्वकर्तृकत्वात्। कालस्याऽपि प्रधानमेव कारणं व्यक्तः स्वभावोऽप्यत्रैव लीनस्तस्मात् कालो न कारणं नापि स्वभाव इति प्रकृतिरेव कारणं न प्रकृतेः कारणान्तरमस्तीति भावः।

अत्रेदमाकूतम्—

एतदभिप्रायपरा काचन कारिका नोटङ्किता कुत्रापि किन्तु गौडपाद-भाष्यमेतदभिप्रायकमस्तीति विलुप्ता कालक्रमेण सा कारिकेति मन्यते-ऽतस्तदभिप्रायवर्णनार्थं सप्ततिकारिका ईश्वरकृष्णस्येति प्रतिज्ञायाः सार्थक्याय चायं पूर्वोक्तश्लोको वर्णितः।

सरलार्थः—जगत्कारणमीश्वरं कालं स्वभावं वा केचन वर्णयन्ति परन्तु सांख्या विचारका वृद्धा नेदं स्वीकुर्वन्ति। सगुणानां लोकाना-मुत्पत्तिर्निर्गुणादीश्वरात्कथमपि न संभवेति तेषामभिप्रायः॥ ८२॥

ननु पुरुषश्चेदगुणोऽपरिणामी कथमस्य सुखदुःखादिरूपो बन्धोऽतो मोक्षोऽपि न, तस्य बन्धेन सामानाधिकरण्यात् तस्मात्पुरुषविमोक्षार्थं प्रकृतिप्रवृत्तिरिति रिक्तं वच इति शङ्कामपाकरोति—

तस्मान्न बद्धो न च मुक्त आस्ते
पुमान् न वा संसरणे समर्थः।
बद्धा च मुक्ता सरणैकशीला
नानाश्रयैषा प्रकृतिः परन्तु॥ ८३॥

तस्मान्निर्गुणत्वादपरिणामित्वाच्च पुमान् पुरुषो न बद्धो न सांसारिक-सुखादिभोग आसक्तो, न वा मुक्त आस्ते वर्तते न वा संसरणे तत्तद्योनौ गमने समर्थः। परन्तु नानाश्रयैषा अनेकपुरुषाश्रया एषा प्रकृतिरेव बद्धा मुक्ता सरणैकशीला संसरणस्वभावा ज्ञेया। अर्थाद् बन्धापवर्गसंसाराः पुरुषे आरोप्यन्ते न वास्तविकाः। यथा विजयपराजयौ सेवकनिष्ठावपि अधिपतावारोप्येते तदाश्रयतया सेवकानां तद्योगित्वात् तत्फलस्य हानि-

लाभादेरधिपतिना सह सम्बन्धात् । भोगमोक्षयोश्च प्रधाननिष्ठयोरपि विवेक-ग्रहाभावात्पुरुषे भानमिति भावः ।

सरलार्थः—वस्तुतः पुरुषो न बध्यते न मुच्यते न वा तत्तद्योनौ संसरति किन्त्वनेकपुरुषाश्रया प्रकृतिरेव बध्यते मुच्यते संसरति चेति भावः ॥ ८३ ॥

यद्यपि प्रकृतिनिष्ठबन्धसंसरणापवर्गाः पुरुषेष्वारोप्यन्त इति पूर्वोक्तं सम्पन्नं तथापि प्रकृतेर्लाभःको बन्धसंसरणापवर्गैरिति विचार्यते—

**धर्मादिभिः सप्तभिरेव भावैः**
**स्वयं विबद्धा प्रकृतिः प्रकृष्टा ।**
**स्वयं तथा मुक्तिमिता विवेक-**
**ज्ञानेन सेयं पुरुषार्थहेतोः ॥ ८४ ॥**

पुरुषार्थहेतोः भोगापवर्गकारणाद् धर्मादिभिः ज्ञानवर्जितधर्मादिभिः सप्तभिरेव भावैः प्रकृष्टा प्रकृतिः स्वयं विबद्धा बन्धनमवाप्ता तथेयं प्रकृतिर्या-त्मानं बध्नाति सा स्वयं विवेकज्ञानेन विवेकख्यात्या मुक्तिमपवर्गम् इता अवाप्ता ।

अयमभिप्रायः—

पुरुषभोगसम्पादनार्थं तत्त्वज्ञानवर्जितैर्भावैर्धर्मादिभिः सप्तभिरेव प्रकृतिरात्मना ( स्वेन ) आत्मानं ( स्वम् ) बध्नाति सैव च पुरुषापवर्ग-सम्पादनाय तत्त्वज्ञानेनैकरूपेणात्मानं ( स्वम् ) मोचयति यस्य पुरुषस्य पुरुषार्थः साधितस्तस्य कृते पुनर्भोगापवर्गौ नोत्पादयतीति भावः ।

सरलार्थः—पुरुषार्थसिद्धयर्थं प्रकृतिर्धमादिभिर्भावैः सप्तभिः स्वेन स्वं बध्नाति तत्त्वज्ञानेनैकेन स्वं मोचयति च । मुक्तपुरुषाय पुनर्भोगा-पवर्गौ न सृजतीति तात्पर्यम् ॥ ८४ ॥

मोक्षदं ज्ञानं कथमुत्पद्यते इत्यालोचयति—

**इत्थञ्च तत्त्वस्य विवेकबुद्धे-**
**रभ्यासतः केवलमेव शुद्धम् ।**